# विषयानुक्रमणिका।





श्रीः ।

ॐनमः सच्चिदानन्दात्मने ।

# लघुवासुदेवमननम् ।

## प्रथमवर्णकम् ।

अद्वैतानन्दपूर्णाय व्यासशंकररूपिणे ।
नमोऽस्तु वासुदेवाय गुरवे सर्वसाक्षिणे ॥ १ ॥
मननाख्यं प्रकरणं वासुदेवयतीरितम् ।
विस्तृतं तद्धि संगृह्य बालबोधाय कथ्यते ॥ २ ॥

इह खलु धर्मार्थकाममोक्षाणां चतुर्णां पुरुषार्थानां मध्ये मोक्ष एव परमपुरुषार्थः । नित्यत्वात् । "न स पुनरावर्तते न स पुनरावर्तते" इति श्रुतेः । इतरेषां त्रयाणां न तथात्वम् । अनित्यत्वात् । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतेः।स मोक्षो ब्रह्मज्ञानादेव सिध्यति। "तमेवं विदित्वाऽतिमृत्युमेति" "नान्यः पन्था विद्यतेऽयनाय" "ब्रह्मविदाप्नोति परम्" इत्यादि श्रुतिभ्यः।

तद्ब्रह्म चाध्यारोपापवादाभ्यां ज्ञातव्यम्।"अध्यारोपापवादाभ्यां ज्ञातव्यस्तत्त्वनिर्णयः"॥ "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः"इति वचनात्। तस्मान्मुमुक्षुणाध्यारोपापवादाववश्यं ज्ञातव्यौ ।

अध्यारोपो नाम शुक्तिकायां रजतवत्, रज्जौ सर्पवत्, स्थाणौ पुरुषवत्, निष्प्रपञ्चात्मवस्तुनि प्रपञ्चारोपः। अयमध्यारोपो वस्त्वज्ञानादागतः। तदज्ञानमेवाविद्या तमो मूलप्रकृतिः प्रधानं गुणसाम्यमव्यक्तं मायेति चोच्यते। मूलप्रकृतिर्नाम शुक्लरक्तकृष्णतन्तुसमुदायरूपरज्जुवत् सत्त्वरजस्तमोगुणसमुदायरूपा। अस्याः प्रलयो महासुषुप्तिरिति च नाम। अस्यां मूलप्रकृतौ अनेककोटिजीवाः स्वस्वकर्मवासनाभिः सह जतुपिण्डे सुवर्णरेणव इव सृष्टेः पूर्वं लीना वर्तन्ते। अयमनुभवः सकलजनानां सुषुप्तावस्ति। सा मूलप्रकृतिः सृष्टिकाले परिपक्वजीवकर्मवशान्माया अविद्या तामसीति त्रिधा जाता। तत्र माया विशुद्धसत्त्वप्रधाना। तत्र प्रतिबिम्बितं सत्सृष्टेः पूर्वं विद्यमानं ब्रह्मचैतन्यमीश्वर इत्युच्यते। तस्याव्याकृत अन्तर्यामीति च नाम। स एव जगत्स्रष्टा। स एव परिपूर्णब्रह्मचैतन्यरूपेण तमस्यवच्छिन्नं सज्जगदुपादानमपि भवति। तन्तोरूर्णनाभिवत् स्वोपाधिप्राधान्येनोपादानकारणम्। स्वप्राधान्येन निमित्तम्। अयमीश्वरः केन प्रकारेण जगत्सृष्टवानिति चेत्। उच्यते। पूर्वोक्ताऽविद्या बहुप्रकारा अनन्ता। तदविद्याप्रतिबिम्बितरूपा जीवा अप्यनन्ताः। अनयोर्जीवेश्वरयोर्व्यष्टिरूपा अविद्या समष्टिरूपा मूलप्रकृतिश्च क्रमेण

कारणशरीरे। तयोः कारणशरीरयोर्जीवस्येश्वरस्य च सुषुप्त्यवस्था। तयोः स्वकारणशरीरमेवानन्दमयकोशः। एवं कारणप्रपञ्चसृष्टिः।

## अथ सूक्ष्मप्रपञ्चसृष्टिरुच्यते।

ईश्वरस्येक्षणवशात्तमोगुणरूपा प्रकृतिरावरणशक्तिर्विक्षेपशक्तिरिति द्विविधा जाता। तत्र विक्षेपशक्तिरेव सूक्ष्म आकाशोऽभवत्। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। एतेषां पञ्चभूतानां सूक्ष्मभूतान्यपञ्चीकृतानि तन्मात्राणि चेति नाम। एतेषामेव सत्त्वरजस्तमोगुणाः कारणादज्ञानादागताः सन्त एतेषामाकाशादीनां पृथक् पृथक् सत्त्वगुणांशात् श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमिति पञ्चज्ञानेन्द्रियाणि क्रमेण जातानि। आकाशादिसत्त्वसमष्ट्या अन्तःकरणं जातम्। मनोबुद्ध्यहंकारचित्तभेदेन तच्चतुर्विधम्। तत्र बुद्धावहंकारस्य मनसि चित्तस्य चान्तर्भावः। एवमाकाशादिरजोगुणाद्वाक्पाणिपादपायूपस्था इति पञ्च कर्मेन्द्रियाणि जातानि। आकाशादिरजोगुणसमष्ट्या प्राणो जातः। प्राणापानव्यानोदानसमानभेदेन स पञ्चविधः। ज्ञानेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्च सप्तदशात्मकमेकीभूय सूक्ष्मशरीरं लिङ्गाख्यमुच्यते। इदमेव भोगसाधनम्। अस्मिन्सूक्ष्मशरीरे जीवेश्वरयोरव-

स्थितिः स्वप्नावस्था । अस्मिन्विज्ञानमयकोशो मनोमयकोशः प्राणमयकोशश्च सन्ति । एवं सूक्ष्मसृष्टिप्रकारः ।

## अथ स्थूलसृष्टिप्रकार उच्यते ।

अथ तमोगुणप्रधानानि पञ्चभूतान्यपञ्चीकृतान्याकाशादीनि पञ्चापि भूतानि प्रत्येकं द्वेधा विभज्य, तत्र प्रत्येकमर्धं चतुर्धा विभज्य, स्वार्धभागं विहाय, इतरभागार्धभागेषु संयोजनं पञ्चीकरणम्। एवं कृते पञ्चापि पञ्चीकृतानि भवन्ति । एतेभ्यः पञ्चभूतेभ्यो ब्रह्माण्डं तदन्तश्चतुर्दशभुवनानि जातानि । अस्मिन्स्थूलशरीरे जीवेश्वरयोरवस्थानं जाग्रदवस्था । इदं स्थूलमेवान्नमयकोशः । एवं स्थूलसृष्टिप्रकारः ।

इदं कारणशरीरमिदं सूक्ष्मशरीरमिदं स्थूलशरीरं च प्रत्येकं व्यष्टिसमष्टिभेदेन द्विविधम्।वनं ग्राम इत्यादिसमष्टिः ।वृक्षो गृहं व्यष्टिः। एवं सर्वशरीरं समष्टिः । एकशरीरं व्यष्टिः। तत्र समष्ट्युपाधिक ईश्वरः। व्यष्ट्युपाधिको जीवः।तत्रापि कारणसमष्ट्या ईश्वरः।कारणव्यष्ट्या प्राज्ञः।सूक्ष्मसमष्ट्या हिरण्यगर्भः। सूक्ष्मव्यष्ट्या तैजसः।स्थूलसमष्ट्या वैश्वानरः।स्थूलव्यष्ट्या विश्वः। इति जीवेश्वरयोरवान्तरभेदः। अयमेवेश्वरः सत्त्वरजस्तमोगुणैरुपाधिभिर्ब्रह्मविष्णुरुद्ररूपेण सृष्टिस्थि-

तिसंहारान्करोति। ब्रह्मणो विराड्रूपेऽन्तर्भावः। विष्णोर्हिरण्यगर्भेऽन्तर्भावः। रुद्रस्येश्वरे चान्तर्भावः। एवं प्रपञ्चोत्पत्तिः। अयमेवाध्यारोपः। इदं विक्षेपशक्तिकार्यम्।

## अथावरणशक्तिकार्यमुच्यते।

ईश्वरमात्मज्ञानिनं च विहायान्येषां सर्वेषां जीवानां पञ्चकोशानामात्मनश्च भेदमावरणशक्तिरन्धकार इवावृणोति। आवरणं च द्विविधम्। असत्त्वावरणमभानावरणं चेति। वस्तु नास्तीति व्यवहारकारणमसत्त्वावरणम्। वस्तु न भातीति व्यवहारकारणमभानावरणम्। आवरणशक्तिकार्यमेव संसारवृक्षस्य मूलम्। न विक्षेपशक्तिकार्यम्। एतन्मोक्षसिद्धेरपि हेतुः। द्विविधमप्यावरणं तत्त्वज्ञानेन विनाश्यम्। तत्त्वज्ञानं च परोक्षज्ञानमपरोक्षज्ञानमिति द्विविधम्। तत्र गुरुमुखाद्वेदान्तजन्यं ज्ञानं परोक्षज्ञानम्। इदमेव श्रवणम्। अनेन वस्तु नास्तीत्येवंरूपमसत्त्वावरणं विनश्यति। तदा वस्त्वस्तीति व्यवह्रियते। श्रवणेन संशयं मननेनासंभावनां निदिध्यासनेन विपरीतभावनां च निवर्तयित्वा देहात्मज्ञानवत् ब्रह्मात्मज्ञानं जायमानमपरोक्षज्ञानम्। अनेन वस्तु न भातीति व्यवहारहेतुरभानावरणं विनश्यति। एवं परोक्षज्ञानेनापरोक्षज्ञानेन चवस्तु नास्ति

न भातीति व्यवहारहेतुरावरणद्वयमपि विनश्यति। तदाऽनर्थनिवृत्तिरानन्दावाप्तिश्च भवति। इति सप्तावस्थाः सिध्यन्ति। सप्तावस्था नाम "अज्ञानमावृत्तिस्तद्वद्विक्षेपश्च परोक्षधीः॥ अपरोक्षमतिः शोकहतिस्तृप्तिर्निरङ्कुशा" इति। एवमाकाशवन्निर्मले चैतन्यवस्तुनि मिथ्याभूतप्रपञ्चकल्पनमध्यारोपः।

## अथापवाद उच्यते।

कारणव्यतिरेकेण कार्यं नास्तीति बोधेन शुक्तिकायां रजतवत्, रज्जौ सर्पवत्, ब्रह्मणि प्रपञ्चो नास्तीति निषेधोऽपवादः। या मा सा माया। या न विद्यते सा अविद्या इति व्युत्पत्त्या मायायाः कल्पितत्वं सिद्धम्। एवं यो ब्रह्म व्यतिरेकेण किमपि नास्ति। तद्ब्रह्माहमेवेति विचार्य जानाति स एव जीवन्मुक्त इति वेदान्त सिद्धान्तः।

इति मनने प्रथमवर्णकं समाप्तम्।

---

## अथ द्वितीयवर्णकम्।

अथ द्वितीयवर्णकेऽनुबन्धचतुष्टयमुच्यते। विषयप्रयोजनसंबन्धाधिकारिण इत्यनुबन्धचतुष्टयम्। अस्य वेदान्तशास्त्रस्य ब्रह्मैव विषयः। मोक्ष एव प्रयो-

जनम्। प्रतिपाद्यप्रतिपादकभावो बोध्यबोधकभावो वा संबन्धः।

साधनचतुष्टयसंपन्नोऽधिकारी। साधनचतुष्टयं नाम नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमादिषट्कं मुमुक्षुत्वं चेति। ब्रह्मैव सत्यं जगदनित्यमिति श्रुतिस्मृतिपुराणादिना स्वयमेव जायमानं ज्ञानं नित्यानित्यवस्तुविवेकः। इह स्रक्चन्दनादिविषयभोगः, अमुत्राप्सरःस्त्रीविषयभोगश्च, उभयमप्यनित्यमिति श्ववान्ताशनमूत्रपुरीषादिवत्तत्र वैरस्यमिहामुत्रार्थफलभोगविरागः। शमदमोपरतितितिक्षासमाधानश्रद्धा इति शमादिषट्कम्। शमो नाम श्रवणादिव्यतिरेकेभ्यो निवृत्तात्मन्येव श्रवणादिविषये मनसः स्थापनम्। दमो नाम ज्ञानकर्मेन्द्रियनिग्रहः। उपरतिः संन्यासो निष्कामकर्मानुष्ठानं व्यवहारलोपो वा। तितिक्षा प्रारब्धागतशीतोष्णादिसहनम्। समाधानं श्रवणाद्यनुकूलविषये मनःसमाधिः। श्रद्धा गुरुवेदान्तवाक्यविश्वासः। गृहे दह्यमाने तत्र दह्यमानः पुरुषः कलत्रपुत्रादिकं परित्यज्य स्वतापोपशमनार्थमेव बहिर्निर्गत्य तापोपशमनं कर्तुमिच्छति एवं सांसारिकतापशमनं संपादयितुं त्यक्तसर्वैषणस्य तीव्रेच्छा मुमुक्षा। लोके केषाञ्चिन्नित्या-

नित्यवस्तुविवेके सत्यपि वैराग्यस्यादर्शनादिहामुत्रार्थफलभोगविरागेणापि भवितव्यमित्युक्तम् । एतत्त्रितये सत्यपि केषाञ्चिद्भक्तया ईश्वरोपासकानां ज्ञानाधिकारादर्शनान्मुमुक्षुतया भवितव्यम् ।

एवंरूपाधिकारी उपहारसमित्पाणिः सन्सद्गुरुमुपगम्य नमस्कृत्य विश्वासविनयाभ्यां सह हे स्वामिन्, हे भगवन्, गुरो, इति संबोध्य जीवः कः, ईश्वरः कः, जगत्कीदृशम्, एतत्त्रितयं कस्मादागतम्, कस्माद्गमिष्यतीति प्रश्नं कुर्यात् । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ॥ इत्यादिश्रुतेः । "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" इति गीतावचनाच्च ।

एवं शिष्येण प्रार्थितः सद्गुरुर्दयया सत्त्वरजस्तमोगुणैर्जीवेश्वरजगदागमनप्रकारं बोधयित्वा आत्मस्वरूपमपि करतलामलकवद्बोधयति । अस्याधिकारिणः साधनचतुष्टयं च बहुजन्मार्जितपुण्यपरिपाकवशादीश्वरानुग्रहेण च लब्धमिति वेदितव्यम् । एतत्तत्त्वज्ञानप्रदायकं गुरुमीश्वरं विन्द्यात् । एवं यो गुरुमुखाज्जीवात्मपरमात्मभेदं विचार्य जानाति स एव मुक्तिं गमिष्यतीति सिद्धम् ।

इति मनने द्वितीयवर्णकं समाप्तम् ।

---

# अथ तृतीयवर्णकम् ।

अयं प्रपञ्चः कतिविध इति चेत् । आत्मा अनात्मा इति द्विप्रकारः। प्रपञ्चातीतस्यात्मनः कथं प्रपञ्चान्तर्भूतत्वमिति न शङ्कितव्यम् । कथमिति चेत् । अस्य प्रपञ्चस्य चेतनाचेतनात्मकत्वात् । आत्मनश्चेतनरूपत्वात् । आत्मानं विना प्रपञ्चस्याभावादात्मनः प्रपञ्चान्तर्भावो वक्तव्य एव ।

तर्हि चेतनं किम्, अचेतनं किमिति चेत् । जंगमं सर्वं चेतनम् । स्थावरं सर्वमचेतनम् । तर्हि चेतनानामचेतनानां च प्रत्येकं बहुप्रकारत्वात् कथं द्विप्रकार एव प्रपञ्च इति चेत् । शृणु । कथमिति चेत् । अनात्मैक एव । स कार्यरूपेणानेकोऽभूत् । आत्मा च एक एव । सोऽप्यनात्मकार्योपाधिभिरनेकजीवा इति अनेकेश्वरा इति च भाति । एकस्येश्वरस्य जीववत्कथमनेकत्वमिति चेत् । पुण्यक्षेत्रेषु ग्रामेषु शिवविष्णवादिमूर्तिभेदेन स्थितत्वादिति ब्रूमः । मृच्छिलादिरूपाणां तासां मूर्तीनां कथमीश्वरत्वमिति चेत् । ईश्वरत्वमस्ति । सर्वैरपि तासु मूर्तिषु बहुद्रव्यव्ययं कृत्वा अभिषेकनिवेदनादेः क्रियमाणत्वात् । येषां शास्त्रविश्वासो नास्ति ते म्लेच्छादयो मूर्तीनां पूजने नोदाहरणीयाः । सर्वत्र श्रद्धावतामेवोदाहरणीयत्वात् ।

किञ्च हेये मलमूत्रात्मकेऽस्मिञ्छरीरे आत्मबुद्धिं कुर्वतां जीवानामत्यन्तशुद्धासु मूर्तिषु ईश्वरबुद्धिकरणे को दोषः ।

एवमेकस्य अनात्मनः कार्यरूपेणानेकत्वे, एकस्यात्मनोऽनन्तकार्योपाधिभिरनेकत्वे च दृष्टान्तः क इति चेत् । शृणु । यथैकैव पृथिवी कार्यरूपेण परिणता सती पर्वतो वृक्षो गोपुरं कुड्यं गृहं कुसूलं मठः शराव इत्यादिभेदं गच्छति, यथाकाश एक एव पृथिवीकार्योपाधिषु इह प्रतीयमानोऽयं घटाकाशः अयं मठाकाशः इत्यादिरूपेणानेकधा भाति, तथा मूलप्रकृतिरनात्मा एक एव कार्यरूपेणानेको जातः ।

आत्मा स्वयमेकोऽपि तत्तच्छरीरोपाधिभिस्तत्र प्रविष्ट इव सन्, देवो मनुष्यो रामः कृष्णो ब्राह्मणः क्षत्रियो वैश्यः शूद्रः पशुः पक्षी कृमिः कीटः इति बहुधा भाति । अयमवच्छिन्नपक्षे दृष्टान्तः । प्रतिबिम्बपक्षे तु समुद्रो नदी तटाकः कूपः घटजलमिति एकमेव जलं बहुधा जातम् । तथा अनात्मापि बहुधा जातः । तेषु समुद्रादिषु आदित्य एक एव प्रतिबिम्बितः सन् बहुधा जातः । तथा एक एवात्मा अन्तःकरणसहितेषु सर्वेष्वपि शरीरेषु प्रतिबिम्बितः सन् अनेको जातः । इत्युभयत्रापि दृष्टान्तो ज्ञात-

व्यः । यथा जलधर्माः शीतकिरणादयो बिम्बमादित्यं न स्पृशन्ति, तथाऽन्तःकरणधर्माः कर्तृत्वभोक्तृत्वविकारा अपि तदन्तःकरणनिष्ठचिदाभास एव भान्ति । बिम्बभूतमात्मानं न स्पृशन्ति । तस्माज्जीवात्मैव परमात्मा परमात्मैव जीवात्मा । कथमिति चेत् । यथा घटाकाश एव मठाकाशः, मठाकाश एव घटाकाशः, एवमिति जानीहि ।

ननु जीवात्मनः कल्पितत्वात्, कल्पितस्यासत्यत्वात् कथं सत्यपरमात्माभेद इति चेत् । पारमार्थिको व्यावहारिकः प्रातिभासिक इति जीवस्त्रिविधः । एते जीवाः क्रमेण सुषुप्तिजाग्रत्स्वप्नाभिमानिनः । यथा जले तरङ्गः कल्पितः, तरङ्गे फेनः कल्पितः, तथा पारमार्थिके व्यावहारिकः कल्पितः, व्यावहारिके प्रातिभासिकः कल्पितः । माधुर्यद्रवशैत्यादीनि पारमार्थिकजलनिष्ठान्येव सन्ति तरङ्गे भान्ति तद्द्वारा फेने भान्ति । तद्वत्कूटस्थसच्चिदानन्दाः कूटस्थपारमार्थिकनिष्ठाः सन्तो व्यावहारिके भान्ति । तद्द्वारा प्रातिभासिके भान्ति । यथा फेनस्तरङ्गं विना नास्ति, तरङ्गोऽपि जलं विना नास्ति, जलं तु परमार्थभूतम् । एवं प्रातिभासिकोऽपि व्यावहारिकं विना नास्ति । व्यावहारिकोऽपि पारमार्थिकं विना ना-

स्ति। तस्मिन्यथा परमार्थत्वेन घटाकाशो मठाकाश एव। एवं पारमार्थिकः कूटस्थपरमात्मैवेति सिद्धान्तः। एवं "नेति नेति" वाक्येन देहादिपञ्चकोशेभ्यः पारमार्थिककूटस्थं पृथक्कृत्य तं पारमार्थिकं कूटस्थमहमितिजानन्सन्,तदहं ब्रह्माहमस्मीति श्रुतिस्मृतिविचारेण युक्तिभिर्दृढनिश्चयेन च साक्षात्कृत्य तिष्ठति। स एष परिपूर्णब्रह्मस्वरूपः।तमेव पुण्यपापकर्माणि न स्पृशन्तीति सर्वा अप्युपनिषद एकतात्पर्येण घुष्यन्ति ।

इति मनने तृतीयवर्णकं समाप्तम् ।

---

## अथ चतुर्थवर्णकम् ।

अथेदानीं जीवस्य दुःखं जन्म च कर्म च रागद्वेषादि चाभिमानश्चाविवेकश्चाज्ञानं चेत्येतेषु पूर्वपूर्वं प्रति उत्तरोत्तरं हेतुः । तत्र दुःखादिचतुष्टयं च चतुर्थवर्णके विचार्यते ।

जीवात्मनो दुःखं स्वाभाविकं वा आगन्तुकं वा इति चेत् । आगन्तुकमिति ज्ञेयम् । स्वाभाविकमिति चेदनेकदोषाः सन्ति । तत्कथमिति चेत् । अस्य जीवात्मनो दुःखं स्वाभाविकं चेद्दुःखनिवृत्तिः कदाचिदपि न स्यात् । सुखमपि कस्यापि न स्यात् । दुःखनिवृत्त्यै सुखप्राप्त्यै कर्म कस्यापि मास्तु । सत्कर्मयोगध्यानोपा-

सनेषु कस्यापि प्रयत्नो मास्तु। वेदशास्त्रपुराणानि च व्यर्थानि स्युः। इति जानीहि।

तर्हि दुःखं स्वाभाविकमस्तु। तन्निवृत्त्यै प्रयत्नं करोत्विति चेत्। न कदाचिदपि तन्नाशः संभवति। स्वाभाविकस्य स्वस्वरूपत्वात्। स्वस्वरूपनाशार्थं को वा प्रयत्नं कुर्यात्। स्वरूपनाशे सति पुरुषार्थभाक् च न स्यात्। स्वाभाविकमेव स्वस्वरूपम्। कथमिति चेत्, गुडस्य मधुररसः स्वभावः तस्य मधुरगुणस्य नाशे भवितव्ये गुडस्यैव नाशो भवेत्। तथा जीवात्मनो दुःखं स्वाभाविकं चेत्, दुःखनाशे आत्मस्वरूपनाश एव स्यात्। आत्मनो नाशो नास्ति। अविनाशी नित्य इति च। "अविनाशी वारेऽयमात्मा"। "आकाशवत्सर्वगतश्च नित्यः" "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्"। "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे"॥ इत्यादि श्रुतयो वदन्ति। तस्मादात्मनो दुःखं स्वाभाविकं न भवति आगन्तुकमेवेति जानीहि। स्वाभाविकं नश्यतु, स्वरूपं तिष्ठतु इति चेत्। तन्न संभवति।

ननु अग्नेः स्वाभाविकमुष्णत्वं मणिमन्त्रादिभिर्गच्छति। स्वरूपनाशोऽपि नास्ति। अन्यच्छैत्यमप्या-

गच्छाति । तथात्मनोऽपि दुःखं स्वाभाविकं भवतु। तदुत्कृष्टकर्मोपासनयोगबलेन गच्छतु, सुखं वागच्छतु इति वदसि चेत्। सा निवृत्तिस्तात्कालिक्येव नात्यन्तिकी। कथमिति चेत् । कर्मजन्यं सकलमपि कर्मनाशे न नश्यति। त्वदुक्तदृष्टान्तदार्ष्टान्तिकयोरग्न्यात्मनोरुष्णत्वं दुःखत्वं च मणिमन्त्रादिभिरुत्कृष्टकर्मोपासनयोगैश्चागतमपि तत्कर्मक्षये तु शैत्यं च सुखं च गच्छेत्। पुनः स्वाभाविकमुष्णत्वं दुःखत्वं चागच्छेत् । एवं च सति सर्वजीवानां तात्कालिकमुक्तिं विना पुनर्जन्मराहिता मुक्तिर्न स्यात् । किंच मोक्षस्य जन्यत्वेऽनित्यत्वमपि स्यात्। "न स पुनरावर्तते" इति मुक्तेर्नित्यत्वप्रतिपादकश्रुतेः "अखण्डमानन्दमरूपमद्भुतम्" इति श्रुतेश्च विरोधः स्यात्। आत्मनो दुःखस्वभावत्वे सुषुप्त्यवस्थायां तूष्णींभावे योगिनां समाधौ च दुःखमेव प्रतीयात् । तथा न दृश्यते। किंतु त्रयाणामपि उत्थानानन्तरं एतावत्पर्यन्तं सुखमेवाहमासमिति सुखमेव स्मर्यते। तस्मादात्मनः सुखमेव स्वाभाविकम्। दुःखमागन्तुकमिति जानीहि।

सुखस्वरूपस्याप्यात्मनो दुःखं शरीरपरिग्रहेणागतम्।यत्र यत्र शरीरपरिग्रहस्तत्र तत्र दुःखमिति व्याप्तेः। लोके राजादीनामपि शरीरपरिग्रहेण दुःखमस्ति वेतिचे

त् । अस्त्येव। तेषामपि शत्रुपीडया राज्यभारेण धनधान्यक्षयेन स्त्रीपुत्रादिमरणेन च जरादिना स्वमरणेन दुःखदर्शनात्। लोके केचन सुखेन वर्तन्त इति व्यवहारो वृथा मोह एव । मोहेनापि दुःखस्य सुखत्वव्यवहारः कथमिति चेत् । भारवाहको बहुयोजनदूरं कार्यार्थं त्वरया धावन्, सन्ततमपि कृष्यादिकर्मकरणशीलश्च, एवमादयः सर्वेऽपि स्वस्वकर्मणो दुःखरूपत्वेऽपि मोहेन तत्तत्कर्म सुखं मत्वा संतुष्टा गानं कुर्वन्ति, वत्साहवन्तश्च वर्तन्ते । तस्मान्मोहेन दुःखमेव सुखं भातीति ज्ञातव्यम् ।

तर्हि विवेकिनामपि शरीरपरिग्रहाद्दुःखमस्ति वेति चेत्,तेषामपिक्षुत्पिपासादिना शीतोष्णादिना व्याधिना सर्पवृश्चिकव्याघ्रादिना च दुःखमस्त्येव । तर्हि विवेक्यविवेकिनोः को विशेष इति चेत्।तयोर्बाह्यव्यापारेण विशेषाभावेऽपिआन्तरव्यापारेण विशेषोऽस्ति।यो विवेकी स महात्मा दुःखमन्तःकरणस्यैव नात्मनः सच्चिदानन्दस्य आत्मनोऽनृतजडदुःखस्वरूपान्तःकरणधर्मैरणुमात्रसंबन्धो नास्तीति श्रुतियुक्त्यनुभवैर्विचार्य ज्ञात्वा तिष्ठति । तथाहि "असङ्गो ह्ययं पुरुषः" इति श्रुतेः । निरवयत्वात्सत्यत्वादिकाः युक्तयः । सुषुप्तिषु तूष्णींभावसमाधिषु अनुभवो वेदितव्यः ।

योऽविवेकी स दुरात्मा आत्मस्वरूपमविचार्यदेहादिकमेवात्मानं मत्वा,अनात्मधर्मांश्चात्मन्यारोप्य,आत्मनः सच्चिदानन्दान्धर्मांश्च अनात्मन्यारोप्य,एवमन्योन्याध्यासं कुर्वन् अहं देवः,अहं मनुष्यः,अहमान्ध्रः,अहं द्राविडः,अहं ब्राह्मणः,अहं क्षत्रियः,अहं वैश्यः, अहं शूद्रः अहं ब्रह्मचारीः,अहं गृहस्थः,अहं वानप्रस्थः,अहं संन्यासीत्यादिप्रकारेणजातिवर्णाश्रमाभिमानी तिष्ठति । एवं विवेक्यविवेकिनोर्बहुभेदोऽस्ति । विचार्यमाणे तयोर्बाह्यव्यापारेणापि न साम्यम् । कथमिति चेत् । विवेकी प्रपंञ्च सर्वमपि मिथ्येति निश्चित्य प्रारब्धभोगमपि स्वर्गभोगतुल्यमेवेति पश्यति । अविवेकी तु प्रपञ्चः सत्यसुखदुःखानुभवोऽपि सत्य एवेति पश्यति ।

एवं विवेकिनामपि शरीरपरिग्रहाद्दुःखमस्त्येव।देवानामपि 'वज्रहस्तःपुरंदरः' इत्यादिना शरीरपरिग्रहस्य दर्शनाद्दुःखमस्त्येव। कथमिति चेत् । अन्योन्यं युध्यतोः को"शापाभ्यामसुरराक्षसयोरुपद्रवदर्शनात् । पुण्यकर्मफलनाशे सति भाव्यधःपतनभयादपि दुःखमस्ति । कथं दुःखिनामपि तेषामितैररुपास्यत्वं, कथं वा सुखदातृत्वमिति चेत । अस्मिंल्लोके राजप्रभृतीनामपि स्वाश्रितपरिपालनादिकं यथा तथेति ज्ञेयम् । "देवलोके देवा आनन्दरूपास्तिष्ठन्ति"इतिश्रुतेः। देवा

दुःखं सर्वमप्यन्तःकरणधर्मं मत्वा आत्मानमानन्दस्वरूपं सदानुभवन्त एव तिष्ठन्तीति तात्पर्यम्। तेषामपि दुःखमान्तीति वदन्त्याः "ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्" इतिश्रुतेः देवानामपि शरीरपरिग्रहाद्दुःखमस्त्येवेति तात्पर्यम्। तस्माद्विदेहमुक्त्यर्थमेव प्रयत्नः कर्तव्यः।

अशरीरमुक्तेरेव मुक्तित्वं चेत्, सशरीरा आकाशे नक्षत्ररूपेण परिदृश्यमानाः केचन देवा मुक्ता इति मनुष्यैः कथ्यन्त इति चेत्। शृणु। सालोक्यं सामीप्यं सारूप्यं सायुज्यमिति चतुर्विधा मुक्तिः। चर्या क्रिया योगो ज्ञानमिति चतुर्णां क्रमेण साधनानि। भगवत्कैङ्कर्यरूपदासभावश्चर्या। शिवविष्ण्वादिपूजाविधिः क्रिया। यमनियमाद्यष्टाङ्गयोगो योगः। जीवपरयोरैक्य साक्षात्कारो ज्ञानम्। तत्र तिस्रो मुक्तयो मुख्या न भवन्ति। पुनरावृत्तेः सद्भावात्। सायुज्यमेव मुख्या मुक्तिः। पुनरावृत्तिवर्जनात्। योगेन सायुज्यमिति निर्गुणब्रह्मयोगविषयः। सशरीरमुक्तानामिव अशरीरमुक्तानां कदापि कुत्रचिदपि कथंचिदपि दर्शनाभावाच्छून्यमेवाशरीरमुक्तिरिति न मन्तव्यम्। अशरीरमुक्तानां शरीरस्यैव शून्यत्वम्। न स्वरूपसुखस्य। स्वरू-

पसुखं तु सुषुप्तिसुखवत् अशरीरत्वात् स्वसंवेद्यमेव नान्यत्संवेद्यम् ।

सुषुप्तिर्मुक्तिसमाना चेत्, सापि मुक्तिः स्यात् इति न वाच्यम् । सुखानुभवमात्रेण साम्येऽपि सुषुप्तावज्ञानं पुनरुत्थानं चास्ति । मुक्तौ तदुभयमपि नास्ति । अतः सुषुप्तेर्मुक्तित्वं न संभवति।अत एव प्रलयस्यापि न मुक्तित्वम्।एवं सुषुप्तिसुखवत् मुक्तिसुखम् । सुखस्य स्वानुभवगम्यत्वात् प्रत्यक्षत्वमेव न शून्यत्वम् । तर्हि सशरीरमुक्तानामिह अशरीरमुक्तेरपि प्रत्यक्षत्वे को भेद इति चेत् । अज्ञाननिवृत्तिः पुनरुत्थानाभावश्च भेद इत्युक्तम् । एवं श्रुतियुक्तिभ्यामशरीरमुक्तेः परमसुखत्वं शरीरपरिग्रहेण दुःखं चोक्तम् । इदानीमनुभवेनापि तदुभयं वदामः । नित्यं सुषुप्तौ शरीरपरिग्रहाभावाद्दुःखाभावश्च । जाग्रत्स्वप्नयोः शरीरपरिग्रहेण दुःखं च सर्वैरनुभूयते । तस्माद्यत्र यत्र शरीरपरिग्रहस्तत्र दुःखमितिव्याप्तेः । आनन्दरूपस्यात्मनः शरीरपरिग्रहादेव दुःखमागच्छति । न तु स्वतः । तस्य शरीरस्य को वा हेतुरिति चेत् । पूर्वकर्मसहितपञ्चीकृतभूतान्येव । न केवलभूतानि । तेषां सर्वत्र वर्तमानत्वात्तेभ्यः शरीरं स्यादिति न वक्तव्यम् ।

ननु शुक्लशोणितसंबन्धेन रूपेण परिणतानामेव-

भूतानां शरीरकारणत्वेन विवक्षितत्वात् तादृशान्येव शरीरस्य कारणमिति वक्तव्यम् । शुक्लशोणितेषु शरीरोत्पत्त्यदर्शनात् । तस्मात्कर्मसहितान्येव शरीरस्य कारणानि । पञ्चभूतादीनां देशकालादीनां च सर्वसाधारणत्वात्तत्तत्कर्मवैचित्र्ये हेतुः । यथा मृदादीनां साधारणत्वेऽपि कुलालव्यापारवैचित्र्यमेव घटादिकार्यवैचित्र्ये हेतुः । यथा दृष्टान्ते घटादेर्मृदुपादानं, कुलालव्यापारो निमित्तं, एवं दार्ष्टान्तिकेऽपि शरीरस्य पुञ्जीभूतपञ्चीकृतभूतान्युपादानम्, तत्तत्कर्म निमित्तम् । तस्माद्भोगप्रदकर्माणि सन्ति यथा जाग्रत्स्वप्नयोः । कर्माभावे शरीराभावः यथा सुषुप्तौ । किंच मृदि सत्यामपि कुलालव्यापाराभावे घटोत्पत्त्यभावः । तथा ईश्वरसृष्टपञ्चभूतेषु सत्स्वपि आत्मज्ञानेन कर्मसु नष्टेषु सत्यज्ञानिनः शरीरं नोत्पद्यते ।

ननु कर्मशास्त्रे "अवश्यमनुभोक्तव्यम्" इति, "नाभुक्तं क्षीयते कर्म" इत्यादि च, ज्ञानशास्त्रे "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति च वचनयोः परस्परविरोधे कथं निर्णयः कर्त्तव्य इति चेत् । शृणु।शास्त्रे प्रबलवचनं दुर्बलवचनं चास्ति।प्रबलं सिद्धान्तवचनम्।दुर्बलं पूर्वपक्षवचनम्। प्रबलं दुर्बलं निरस्यति।तद्यथा–'अहिंसा परमो धर्मः' इति वचनं प्रबलमपि

सत् "यागे पशुवधः कर्तव्यः" इति वचनमतिप्रबलं निरस्यति । एवं 'अवश्यमनुभोक्तव्यम्' इति वचनं 'तपसा कल्मषं हन्ति' इति प्रबलवचनेन दुर्बलं सत् निरस्यते । तस्मात्संचितेषु कर्मसु बहुषु सत्स्वपि आत्मज्ञानेन तानि नश्यन्त्येव । कर्माभावे जन्माभावः । जन्माभावे दुःखाभावः । दुःखाभावे आनन्दावाप्तिः । इत्ययमेव सिद्धान्तः ।

इति मनने चतुर्थं वर्णकं समाप्तम् ।

## अथ पञ्चमवर्णकम् ।

अस्यात्मनो दुःखं शरीरपरिग्रहात्, शरीरं कर्मणेत्युक्तम् । तत्कर्म किं कतिविधमिति चेत् । शृणु । कर्म त्रिविधम् । पुण्यं पापं मिश्रं चेति । देवादिशरीरं पुण्यकर्मफलम् । तिर्यगादिशरीरं सर्वं पापकर्मफलम् । मनुष्यादिशरीरं पुण्यपापमिश्रितफलम् । एवमुक्तं त्रिविधमपि कर्म उत्कृष्टं मध्यमं सामान्यमिति प्रत्येकं त्रिविधम् । एवमुक्तकर्मभेदेन जन्मभेदश्च नानाप्रकारः । तथाहि हिरण्यगर्भादिशरीरं पुण्योत्कृष्टम् । इन्द्रादिशरीरं पुण्यमध्यमम् । यक्षराक्षसपिशाचादिशरीरं पुण्यसामान्यम् । परसंतापककण्टकवृक्षविषवृक्षव्याघ्रवृश्चिकोलूकादिशरीरं सर्वं पापोत्कृष्टम् । पनसाम्रना-

रिकलादिफलपत्रपुष्पविनियोगवक्षहूलतादि च ग्राम-
सूकरमहिषगर्दभोष्ट्रादिकं च सर्वं शरीरं पापमध्यमम् ।
अश्वत्थतुलसीगवाश्वादिशरीरं पापसामान्यम्।इह मनु
ष्यलोके निष्कामकर्मानुष्ठानसाधनचतुष्टयसद्गुरुलाभ-
श्रवणमननात्मज्ञानक्रमेणजीवन्मुक्तेः विदेहमुक्तेश्च यो
ग्यंमनुष्यशरीरंमिश्रकर्मोत्कृष्टम्।स्वाश्रमोचितकर्मणां
काम्यकर्मणां चानुष्ठानयोग्यं शरीरं मिश्रकर्ममध्यमम्।
चण्डालपुल्कसकिरातयवनादिशरीरं मिश्रकर्मसामा-
न्यम् । तस्माद्विवेकिना पुरुषेण एतत्कर्मफलतारत-
म्यविचारभूमौ मनुष्यजन्मनि मिश्रकर्मोत्कृष्टं यथा
सिद्ध्येत्तथा स्ववर्णाश्रमकर्माणि कृत्वा फलेच्छां
विहाय ईश्वरार्पणं कृत्वा, आत्मविचारद्वारा मोक्ष-
प्राप्तावेव प्रयत्नः कर्तव्य इति सिद्धान्तः । एतत्त्रिवि-
धमपि कर्म केन क्रियत इति चेत्।त्रिविधकरणैरेव क-
र्तव्यमिति जानीहि।ननु अस्मिँल्लोके अहं करोम्यहं क-
रोमीति वदतां सर्वेषामनुभवेनास्मिन्देहे देहाभिमानी
सन् अहंशब्दतया य आत्मा वर्तते तस्यात्मनः कर्तृत्वे
वक्तव्ये,तं विहाय त्रिविधकरणानां भवद्भिः कथं कर्तृत्व
मुच्यत इति चेत्। आत्मा अविकारी निष्क्रियःस्वगत-
भेदशून्यः । तदात्मनः कर्तृत्वं वक्तुं न शक्यते । ननु
कर्तृत्वं तु आत्मनिष्ठतया भाति, कर्ताऽन्यो न दृश्यते।

तत्कथमिति चेत् । आत्मनि प्रतीयमानं कर्तृत्वमध्यासात् । न तु स्वभावत इति जानीहि । स्वाभाविकमिति चेत् । न केनापि वेदान्तविचारं कृत्वा समेदं कर्तृत्वं परिहरणीयम् । अस्यानपाये संसारबन्धोऽपि नापयास्यतीति व्यर्थः प्रयत्नः करणीयः । आत्मनः कर्तृत्वं स्वाभाविकं भवतु । प्रयत्नविशेषेण नश्यत्विति चेत् । स्वरूपनाशार्थं को वा प्रयत्नं कुर्यात् । स्वरूपनाशे सति को वा पुरुषार्थमनुभवेत् । किंच अकर्ता जीवन्मुक्तो न चेत् वेदान्तसंप्रदायो गुरुशिष्यौ च न स्युः । किंच आत्मा अकर्ता साक्षी निष्क्रिय इति प्रतिपादकस्य "निष्फलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिवाक्यस्यापि हानिः स्यात् । सुषुप्तौ आत्मनि विद्यमानेऽपि कर्तृत्वं न दृश्यते । यदि कर्तृत्वं स्वाभाविकं अग्नेरुष्णत्वमिवोपलभ्येत । तथा नोपलभ्यते । तस्मादात्मनः कर्तृत्वं न स्वाभाविकम् ।

ननु सुषुप्तौ कर्तृत्वानुपलम्भः करणवियोगात् । यथा तक्षादेः कर्तृत्वे विद्यमानेऽपि स्नानभोजनादिसमये तदनुपलम्भः । तद्वद्भवितव्यमिति चेत् । न । तूष्णींभूतावस्थायामन्तःकरणसंयोगे विद्यमानेऽपि कर्तृत्वा-

नुपलम्भात् । आत्मनः कर्तृत्वं न स्वाभाविकम्। किंतु आध्यासिकमेव ।

अध्यासो नाम अन्यनिष्ठधर्माणामन्यत्रावभासः। यथा नौनिष्ठगमनस्यतीरस्थवृक्षे तीरस्थवृक्षनिष्ठाचलत्वस्य नावि चाध्यासवशाद्भानम्।एवं त्रिविधकरणनिष्ठकर्तृत्वस्यात्मनि, आत्मनिष्ठाकर्तृत्वस्य त्रिविधकरणे च भानमज्ञानवशादेव । तस्मादात्मनः कर्तृत्वमारोपादिति जानीहि। जडस्य त्रिविधकरणस्य अचेतनत्वात् अचेतनस्य कथं कर्तृत्वम्, करणत्रयस्यैव कर्तृत्वे तस्य करणान्तरेणापि भवितव्यमिति चेत् । शृणु। यथा लोकेऽचेतनस्य वायोर्वृक्षादीनामुन्मूलने तेषां दूरनिरसने च करणं विना कर्तृत्वम्, यथा जलप्रवाहस्याप्यचेतनस्य वृक्षादीनामुन्मूलने तेषां दूरनिरसने च करणं विना कर्तृत्वं दृश्यते, तथा त्रिविधकरणस्यापि करणान्तरं विना कर्तृत्वमुपपद्यते ।

सविशेषचिन्ता निर्विशेषचिन्ता परलोकचिन्ता भक्तिज्ञानवैराग्यचिन्ता इत्यादिविकाराः सर्वेऽपि मनसा क्रियमाणानि कर्माणि मानसपुण्यकर्माणि। विषयचिन्ता परेषामपकारचिन्ता वेदशास्त्रयोरप्रामाण्यचिन्ता धर्माद्यभावचिन्ता इत्यादिबुद्धिविकाराः सर्वेऽपि मानसपापकर्माणि । सविशेषचिन्ताया निर्विशेषचि-

न्ताया अपि विषयचिन्तादिपापचिन्तया मिश्रीकृत्यानुष्ठानं मानसं मिश्रकर्म । वेदशास्त्रपठनं, गीतापठनं, सहस्रनामपठनं, पञ्चाक्षरादिमन्त्रजपः, भगवन्नामकीर्तनं, परोपकारवार्ता, सत्यवाक्यं, मृदुभाषणं च वाचा क्रियमाणं पुण्यकर्म । वेदशास्त्रदूषणं, असत्यापिशुनपारुष्यवार्ता, अपहास्यवार्ता च इत्यादिवचनं सर्वं वाचिकं पापकर्म । वेदाध्ययने पूजाकाले एवमादिपुण्यवार्तासु च परनिन्दाया असत्यस्य परिहासस्य च लौकिकवार्तायाः एवमादिपापानां मिश्रीकृत्यानुष्ठानं वाचिकं मिश्रकर्म। पुण्यतीर्थस्नानं गुरुवेदान्तनमस्कारः, देवपूजाप्रदक्षिणं, सज्जनदर्शनं, त्यागः, लोकानुग्रहसंचारः एवमादिकर्माणि कायेन क्रियमाणानि कायिकं पुण्यकर्म। परहिंसा, परस्त्रीसङ्गः, चौर्यं दुष्टसंगः इत्यादि क्रियमाणानि कायेन कर्माणि कायिकं पापकर्म । ब्राह्मणभोजनार्थं ब्राह्मणोपद्रवः, देवालयनिर्माणार्थं परद्रव्यापहारः, प्रपां स्थापयित्वा भृतकस्याप्रदानं, एवमादिकर्माणि पुण्यानि पापानि च मिश्रीकृत्य कायेनानुष्ठीयमानानि कायिकं मिश्रकर्म ।

एतानि त्रिविधान्यपि कर्माणि सम्यग्विचार्याणि । विचारस्य किं फलमिति चेत् । मुख्यफलमवान्तरफलमिति फलद्वयमस्ति।कथमिति चेत्।इमानि त्रिविध-

कर्माणि त्रिविधैरेव करणैः क्रियन्ते । आत्मा त्वहमाकाशवदसंगो निरंशः परिपूर्णचैतन्यरूपः । अतो न कस्यापि कर्मणः कर्ता । अत एव "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तेन चात्मेति गीयते" ॥ इत्युक्त आत्मशब्दस्यार्थः । तस्मान्नैकमपि कर्म चिदाकाशस्वरूपं मां स्पृशतीति ज्ञात्वा संशयं विहाय दृढानुभवेनावस्थानं मुख्यफलम् । ब्रह्मज्ञाने सत्यपि त्रिविधकरणमपि पुण्यकर्मण्येव स्थापनीयम् । तदसंभवे मिश्रकर्मणि वा स्थापयितव्यम् । न कदाचिदपि पापकर्मणीति ज्ञात्वा तथैवावस्थानमवान्तरफलम् । यथा कदलीपोषकस्य कदलीफलं मुख्यफलं तत्पत्रपुष्पादिकमवान्तरफलं तथैव त्रिविधकरणकृतकर्मज्ञानस्यापि पूर्वोक्तफलद्वयमिति ज्ञेयम् ।

ननु अम्भसा पद्मपत्रमिव कर्मणा ज्ञानी न लिप्यते । तस्य न कोऽपि विधिः । न निषेधो वा । सत्वकर्ता कर्मसाक्षी कृतकृत्य इति सिद्धान्तितत्वात्तस्य ज्ञानिनोऽज्ञानिन इव पुण्यकर्मैवानुष्ठेयमिति न नियमः । कथमिति चेत् । सत्यं ज्ञानी कृतकृत्य एव । कर्तापि न भवति । न तत्र संदेहः । तथापि ब्रह्मवित् । ब्रह्मविद्वरः । ब्रह्मविद्वरीयान् । ब्रह्मविद्वरिष्ठः । स एव विदे-

हमुक्तः । असौ वरिष्ठ एव वृत्तिशून्यः । तस्यैव न विधिर्न निषेधश्च । अन्येषामपि त्रयाणां ज्ञानमहिम्ना विधिनिषेधाभावेऽपि वृत्तिशून्यत्वाभावात् व्यवहारवत्त्वाच्च लोकानुग्रहार्थं सदाचार एव स्थातव्यमित्युच्यते । न तु नियम्यते । तस्मात्तत्त्वज्ञानिना कर्मिणां मध्ये कर्मिवत्कर्मानुष्ठेयम् । जिज्ञासूनां मध्ये तु कर्म त्यक्त्वा, ब्रह्मैव सत्यमन्यत्सर्वमनित्यमिति ज्ञानमेवोपदेष्टव्यम् । अत्र प्रकृतं किमिति चेत् । त्रिविधकरणस्यैव कर्तृत्वं नात्मन इति निश्चितम् ।

अथ त्रिविधमपि करणं किं स्वयमेव कर्तृ, अन्येन प्रेरितं वा । इति विचार्यमाणे रागद्वेषादिना प्रेरितमेव कर्तृ । न स्वयं कर्तृ । रागद्वेषादौ सति करणत्रयं प्रवर्तते । असति न प्रवर्तते । इत्यन्वयव्यतिरेकाभ्यां रागद्वेषादेः करणप्रवर्तकस्यानुभवसिद्धत्वात् ।

ननु अहं देवालयं कारयामि, अहं तटाकं कारयामीत्यादिव्यवहारात् आत्मा कारयिता भवत्विति चेत् । न । आत्मनो निर्विकारत्वान्न तत्रापि कारयितृत्वमुपपद्यते । आत्मनि कारयितृत्वं भातीति चेत् । जपाकुसुमनिष्ठलौहित्यं स्फटिक इव रागद्वेषादिनिष्ठकारयितृत्वमात्मनि भ्रान्त्या आरोप्यत इति ज्ञेयम् । स्वाभाविकं चेत्,न कोऽपि यत्नं कुर्यात् । स्वभावस्य

स्वस्वरूपत्वात्। कथंचित् तस्य नाशे स्वरूपस्यैव नाशः स्यात्। आत्मज्ञानिनोऽपि कारयितृत्वं यदि स्यात्, आत्मा असङ्गो निष्क्रिय इति प्रतिपादिका "अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते। स आत्मा। स विज्ञेयः" इति श्रुतिर्विभज्येत। कारयितृत्वस्य जन्यत्वे तत्प्रयुक्तमुक्तेरपि जन्यत्वं स्यात्। मुक्तावपि कारयितृत्वं दृश्येत। तस्मादात्मनः कारयितृत्वं न स्वाभाविकम्। किन्त्वागन्तुकमेव।

ननु सुषुप्तौ कारयितृत्वादर्शनमात्रेण आत्मनः कारयितृत्वं नास्तीति वक्तुं न शक्यते। यथा उपाध्यायस्याध्यापकत्वं विद्यमानमपि शिष्यवर्गासन्निधाने न दृश्यते, तद्वत्सुषुप्तौ करणसंयोगाभावाद्विद्यमानमपि कारयितृत्वं न दृश्यते। जाग्रत्स्वप्नयोः करणसंयोगे सति वक्तुं शक्यत्वादिति चेत्। तर्हि जाग्रदुदासीनतूष्णींभावावस्थायां करणसंयोगस्य विद्यमानत्वात्कारयितृत्वं दृश्येत। तन्न दृश्यते। तस्मादागन्तुकमेवेति वक्तव्यम्। अन्योन्याध्यासात् अयोनिष्ठदीर्घत्वह्रस्वत्वादयः अग्नौ, अग्निनिष्ठोष्णप्रकाशादयोऽयसि च भान्ति। तद्वदेव रागद्वेषादिनिष्ठकारयितृत्वमात्मनि, आत्मनिष्ठाकारयितृत्वं रागद्वेषादौ भाति।

ननु अचेतनस्य रागद्वेषादेः कथं कारयितृत्वम् । न हि घटो घटान्तरं प्रेरयतीति चेत् । सत्यम् । तथापि कुत्रचिद्योग्यतावशाज्जडः प्रेरयति । योग्यताभावात्कुत्रचिन्न प्रेरयति । यथा जडोऽप्यग्निर्गन्धकादिसंयुक्ताङ्गालचूर्णविशेषैः सहितः सन् जडमेव बृहन्नलिकान्तःस्थितस्थूलपाषाणं प्रेरयित्वा तेन चतुरङ्गसेनां हन्ति । किंच प्रेतशरीरं जडमपि स्वज्ञातिक्रियमाणापरक्रियां प्रति स्वयं कारयितृ भवति । एवमचेतनमपि रागद्वेषादि कारयितृ भवति । तर्हि "आत्मा हृषीकेशः सर्वान्तर्यामी" इति वदन्त्याः श्रुतेः किं तात्पर्यमिति चेत् । आदित्यवत्संनिधानमात्रेण सर्वजनपुण्यपापानुकूलः स्यात् । तत्पुण्यं च तत्पापं च तत्फलं च यथा न स्यात्तथा आत्मनोऽपि मन्तव्यम् । अयश्चेष्टापि संनिधानमात्रेण स्वानुकूलकान्तशिलां यथा न स्पृशति, तथा प्राणिकर्मापि आत्मानमिति ज्ञेयम् । तस्मादात्मनो निरञ्जनत्वनिर्विकारत्वाभङ्गः ।

एवमात्मस्वरूपे प्रसिद्धगुरुणोपदिश्यमानेऽपि प्रतिबन्धत्रयेण निश्चयो न भवति । प्रतिबन्धत्रयं च संशयभावना असंभावना विपरीतभावना चेति । ऋगादिशाखासूपदिश्यमानमुपनयनादिकर्म अनेकविधं यथा तथा ऋगादिशाखासूपदिश्यमानमात्मत-

त्वमनेकप्रकारं वा न वेति संशयः संशयभावना। सा सकलवेदान्ततात्पर्यावधारणरूपश्रवणेन नश्यति। एवं सर्वेषां वेदान्तानामद्वैते ब्रह्मण्येव तात्पर्यमिति श्रवणेन प्रमाविषये असंशयेन इदमद्वैतं संभाव्यते।सत्यत्वेन प्रतीयमानेषु जीवेश्वरजगत्सु परस्परभिन्नेषु सत्सु भिन्न इति बुद्धिरसंभावना। इयं स्वप्नदृष्टान्तादिरूपयुक्त्यात्मकमननेन नश्यति। एवं श्रवणे मनने कृतेऽप्यनाद्यविद्यावासनया सर्वस्यापि जगतो यथापूर्वं सत्यत्वप्रतीतिर्विपरीतभावना। सा ब्रह्मैकाकारप्रत्ययप्रवाहरूपनिदिध्यासनेन नश्यति। एवं प्रतिबन्धत्रयस्य नाशकारणम्। यथा सर्वस्य दाहकोऽप्यग्निर्मणिमन्त्रादिप्रतिबन्धकैरेकं तृणमपि दग्धुं न शक्नोति, एवं ज्ञानाग्निरपि प्रतिबन्धैः प्रतिबद्धः सन् अज्ञानतत्कार्येषु किंचिदपि दग्धुं न शक्नोति। पूर्वोक्तप्रकारेणास्मिन्प्रतिबन्धत्रयेऽप्यपनीते सति सद्य एवाग्निस्तृणमिव अविद्यातत्कार्यं सर्वमपि दग्धुं शक्नोति।

किंच "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति वचनेन षड्विधलिङ्गेन तात्पर्यनिर्णयः कर्तव्यः। अत्र छान्दोग्यषष्ठाध्याये "सदेव सौम्येदमग्र आसीत्। एकमेवाद्वितीयम्" इत्युपक्रम्य "एतदात्म्यमिदं सर्वम्। तत्स-

त्यम्" इत्यखण्डैकरस एवोपसंहृतः इत्युपक्रमोपसंहारैक्यरूपं लिङ्गम् । "तत्त्वमसि" इति नवकृत्वस्तस्यैवाभ्यासो द्वितीयम् । अखण्डैकरसस्य प्रत्यक्षादिप्रमाणान्तराविषयत्वमपूर्वता तृतीयम् । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य" इति अखण्डैकरसज्ञानस्य प्रारब्धभोगानन्तरं विदेहकैवल्यरूपफलवचनं चतुर्थम् । यथा "सौम्यैकेन मृत्पिण्डेन" इत्यादिना दृष्टान्तकथनमुपपत्त्याख्यं षष्ठम् । अर्थवादस्तु पञ्चमम् ।

सृष्टिस्थितिप्रलयप्रवेशसंशयमननतत्त्वंपदार्थपरिशोधनफलप्रतिपादका इति सप्तार्थवादाः।तत्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्याद्याः सृष्ट्यर्थवादरूपाः श्रुतयः आकाशादेः सर्वस्य ब्रह्मण एवोत्पत्तेः तस्मिन्नेवावस्थानात्, पुनस्तत्रैव लयात् मृदुत्पत्तिस्थितिलयात्मकस्य घटादेर्मृदभेदवत् कारणब्रह्ममात्रतामुपगमयन्त्यो महावाक्योक्तं ब्रह्माद्वितीयत्वं संभावयामासुः । यथा "एतमेव सीमानं विदार्यैतया प्रापद्यत"।"तत्सृष्ट्वा तदेवानुप्राविशत्"। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि"। इत्याद्याः श्रुतयो ब्रह्मण एव जीवरूपेण प्रवेशं ब्रुवन्त्यो बहिः स्थित्वान्तर्गृहप्रविष्टदेवदत्तवत् जीवब्रह्मणोरभेदं महा-

वाक्यार्थं संभावयामासुः । तथा "यः पृथिव्यां तिष्ठन् पृथिव्यामन्तरोऽयं पृथिवी न वेदायस्य पृथिवी शरीरम् । यं पृथिवीमन्तरोऽयमयत्येष कः । आत्मान्तर्याम्यमृत"इत्यादिनियमनश्रुतयश्चात्यन्ताभेदे नियाम्यनियामकभावानुपपत्तेस्तयोरभावमेव संभावयन्ति । तथा"स वा एष पुरुषोऽन्नरसमयः"। "यदग्नेर्लोहितं रूपम्"इत्याद्यास्तत्त्वंपदार्थपरिशोधनरूपाः श्रुतयो जीवेश्वरोभयगतविरुद्धधर्मनिरसनद्वारा तयोरैक्यमेव संभावयन्ति । तथा "ब्रह्मविदाप्नोति परम्" । "अमृतः समभवत्"। इत्याद्याश्च अभेदज्ञानस्य निरतिशयफलप्रदर्शनेन अभेदस्य विवक्षितत्त्वं ज्ञापयन्त्यस्तमेव संभावयन्ति । इत्थं सृष्टिस्थितिलयप्रवेशसंयमनतत्त्वंपदार्थपरिशोधनफलप्रतिपादकैः सप्तविधार्थवादैरनुगृहीतं सत् जीवब्रह्मैक्यरूपमखण्डैकरसमेव अवान्तरवाक्यैः सहितं सत् प्रतिपादयति । अतोऽखण्डैकरसत्वेनैव महावाक्यार्थो वक्तव्यः । इति षड्विधलिङ्गैः श्रुतितात्पर्यावधारणं श्रवणमित्युक्तम् ।

इदानीं किं प्रकृतमिति चेत्।मयोक्तप्रकारेण विचार्य रागद्वेषादिना प्रेरितं सत् त्रिविधकरणं त्रिविधकर्म करोति । प्रधानप्रेरितसेनया संपादितं जयं राजा अहं विजितवानित्यात्मन्यारोपयति । एवमात्मा च

रागद्वेषादिनिष्ठप्रेरकत्वमज्ञानादात्मन्यभिमन्यते। एवमात्मनोऽस्वभावत्वात्कर्तृत्वं कारयितृत्वं च नास्ति इति यो दृढं निश्चिनोति स एव जीवन्मुक्तः ।

इति मनने पञ्चमवर्णकम् ।

---

## अथ षष्ठवर्णकम् ।

पूर्वं प्रतिज्ञातदुःखादिसप्तके दुःखं शरीरं कर्म रागद्वेषादि च उत्तरोत्तरहेतुत्वेनोक्तानि । इदानीं षष्ठवर्णके रागद्वेषादिवृत्तिभेदाः अभिमानः अविवेकः अज्ञानं च कथ्यते । रागो द्वेषः कामः क्रोधो लोभो मोहो मदो मात्सर्यं ईर्ष्या असूया दम्भो दर्पः अहंकारः इच्छा भक्तिः श्रद्धा इति रागद्वेषादिवृत्तयः षोडश । स्त्रीविषयकाचित्तवृत्ती रागः । अपकारकर्तुः प्रत्यपकारेच्छा द्वेषः । गृहक्षेत्रादिसंपादनेच्छा कामः । तस्य विघ्नकर्तरि वैरस्यं क्रोधः । स्वसंपादितेषु किंचिदपि सत्पात्रे न देयमिति बुद्धिर्लोभः । ऐश्वर्यमिति मदेन कृत्याकृत्ये अविचार्य तूष्णीमवस्थानं मोहः। स्वस्य संपदस्ति किंवा किंवा कर्तुमशक्यमिति बुद्धिर्मदः । स्वसमानसंपन्नजनदर्शनासहनं मात्सर्यम्।इदं दुःखं तं विहाय मम किमित्यागतमिति चित्तवृत्तिरीर्ष्या । इदं दुःखं

ममैव तस्यापि न किमित्यागतमिति बुद्धिरसूया। अनेन धर्मेण मम प्रसिद्धिर्भूयादिति चित्तवृत्तिर्दम्भः। मम न कोऽपि समान इति बुद्धिर्दर्पः। सर्वत्राग्रहोऽहंकारः। अवर्जनीयप्राशनमोचनादिकर्मचिकीर्षा इच्छा। गुरौ सज्जनेषु देवतासु चातिप्रीतिर्भक्तिः। यागादिकर्मसु वेदान्तवाक्ये गुरूपदेशे च विश्वासः श्रद्धा। इति षोडशविधं रागद्वेषादि।

आत्मविचारप्रकरणे चित्तवृत्तिविचारस्य किं प्रयोजनमिति चेत्। शृणु। सकलजीवानां बन्धमोक्षौ मनसैव नान्येन। कथमिति चेत्। स्वभावनिर्मलस्य मनसोऽशुद्धेन योगो बन्धः। शुद्धरूपेणावस्थानं मोक्षः। रागादिचतुर्दश वृत्तयोऽप्यशुद्धाः। भक्तिश्रद्धे द्वे तु शुद्धे। रागादित्रयोदश वृत्तयः सर्वेषां प्रयत्नं विनैव पुनः पुनरागच्छन्ति। पापेष्वेव मनुष्यान् प्रवर्तयन्ति। तद्वृत्तिशीलानामधोगतिरेव नोर्ध्वगतिः। रागादिवृत्तीर्निरुध्य भक्तिश्रद्धाभ्यामेव। कर्म कुर्वतः क्रमेण संसारनिवृत्तिर्भविष्यति। तस्मात्पुरुषः स्वचित्तं सम्यक्शोधयित्वा अशुद्धहेतुरागादिवृत्तीर्वर्जयित्वा शुद्धिहेतुभक्तिश्रद्धयोरेव चित्तं स्थापयेत्। इच्छया क्रियमाणक्षुत्पिपासादिवृत्तीर्मूत्रपुरीषविसर्जनादिकर्म च त्यक्तुमशक्यम्। तत्त्यागे सत्यपि दुःखमाग-

च्छति । तेन कर्मणा स्वर्गोऽपि नास्ति । स्मादैच्छिकं प्राशनमोचनादिकं कर्म कर्त्तव्यमेव।

एवं जाग्रत्स्वप्नयोः रागादौ सति कर्मास्ति। सुषुप्तिमूर्छासमाधितूर्ष्णीभूतावस्थासु रागादिकं नास्ति-कर्मापि नास्ति । अन्वयव्यतिरेकाभ्यां रागादेः कर्महेतुत्वं सिद्धम्। इतःपरं तद्रागादि केनागच्छतीति चेत्, एवं व्यातिरस्ति वेति चेत्। अस्ति। स्त्रीजनस्य अहं स्त्रीजन इति यावदभिमानोऽस्ति तावद्रागादिपूर्वकं भर्तृशुश्रूषणगृहरक्षापाकक्रियादिकर्मसु प्रवृत्तिरागच्छाति । पुरुषजनस्यापि यावदभिमान आगच्छति तावद्रागादिपूर्वकं दारादिपरिग्रहकृपिवाणिज्यादिकर्मसु च प्रवृत्तिरागच्छति। एवं सर्वेषां जीवानामपि वर्णाश्रमाद्यभिमानेन रागादिपूर्वकं स्वस्वव्यापारे प्रवृत्तिरागच्छति। तस्माद्रागादेरभिमान एव कारणम्।

अस्य विचारस्य किं फलमिति चेत् । मुमुक्षुः पुरुषो जातिवर्णाश्रमवयोवस्थाद्यभिमानं त्यजेत्। तस्मिंस्त्यक्ते बन्धस्त्यक्तो भवतीति जानीहि। अभिमाने सति रागादिः, अभिमानाभावे रागाद्यभावः। इत्यन्वयव्यतिरेकयुक्त्या जानीहि। तत्कथमिति चेत्। जाग्रदाद्यवस्थासु वर्णाश्रमाद्यभिमानस्य विद्यमानत्वाद्रागद्वेषादिनिमित्तका प्रवृत्तिरागच्छति। सुषुप्तौ उदा-

सीनावस्थायां च वर्णाश्रमाद्यभिमानाभावाद्रागद्वेषा-
दिनिमित्तका प्रवृत्तिर्नास्ति। इत्येतज्जानीहि।

तर्हि अयमभिमानः केनागच्छतीति चेत्। अवि-
वेकेनागच्छति। तत्कथमिति चेत्। सर्वेषां जीवानां देहव्यतिरिक्तत्वे सत्यपि विवेकाभावात्—अहं ब्राह्मणः, अहं क्षत्रियः, अहं वैश्यः, अहं शूद्रः, अहं ब्रह्मचारी, अहं गृहस्थः, अहं वानप्रस्थः, अहं संन्यासी, अहं पुरुषः—इत्यद्याभिमानो जायते। तं विना नान्यो हेतुः। अस्याभिमानस्य अविवेकं विना अन्यच्छरीरमवलंब-
नमिति चेत्। क्षत्रियस्य अहं ब्राह्मण इति, स्त्रियाः पुरुष इति, ब्रह्मचारिणोऽहं गृहस्थ इत्यभिमानोऽस्तु। स न दृश्यते। तस्माच्छरीरमवलम्ब्य अभिमानो नागच्छति। शिखां यज्ञोपवीतमवलम्ब्य अहं ब्राह्मण इति, काषायकमण्डल्वादिकमवलम्ब्य अहं संन्यासी ति च अभिमान आगच्छतीति चेत्। शिखायज्ञोपवी-
तादि वैश्यकुलालयोरप्यस्ति। काषायकमण्डल्वादि केषांचिच्छूद्राणां तपस्विनामप्यस्ति। तेषामेतेषां च अहं ब्राह्मणः अहं संन्यासीत्यभिमानः स्यात्। तन्न दृश्यते। स्त्रीपुरुषाद्यभिमानवत्। अवयवविशेषमव-
लम्ब्य अहं ब्राह्मण इत्यभिमान इति चेत्। सर्वेषाम-
प्यवयवविशेषाभावात् एकरूपत्वात् अवयवविशे-

षेऽप्यवलम्बनं न भवति। तर्हि विशिष्टमातृपितृजन्यावयवविशेषमवलम्ब्य अभिमानविशेष इति चेत्। तज्जन्यलोमनखदन्तमूत्रपुरीषाद्यवयवानामपि ब्राह्मणत्वादिव्यवहारः स्यात्। स न दृश्यते। तस्मादविवेकं विना अन्यत्किमप्यवलम्ब्य अभिमान आगच्छतीति ब्रह्मणापि वक्तुं न शक्यते।

तर्हि ब्राह्मणत्वाद्यभिमानः केनागच्छतीति सम्यग्विचार्यमाणे, लोके उत्सवमिति कल्याणमिति सभेति सेनेति अनेन वस्तुसमूहस्य तत्तन्नाम्ना व्यवहारः प्रवर्तते। तथा मायामयस्यापि अनिर्वचनीयस्यापि देहेन्द्रियादिसंघातस्यैव लोकव्यवहारेण केवलं ब्राह्मणः क्षत्रियो वैश्यः शूद्रः स्त्री पुरुषो नपुंसको गुर्जरो महाराष्ट्रकः आन्ध्रः कर्णाटको द्राविडः शास्त्री दीक्षितः अवधानी पौराणिको गङ्गास्नायी शैवो भागवतः सेवकः प्रधानी राजा मन्त्री गुरुः शिष्य इत्यादिसकलनामव्यवहारः। कालत्रयेऽप्यात्मनो नामव्यवहारो नास्ति। इत्येवंरूपविचाराकरणमेवाविवेकः। अनेनैवाविवेकेन सर्वेषामात्मनि वर्णाश्रमाद्यभिमान आगच्छति।

अयमविवेकः केनागच्छतीति चेत्। स्वस्य निजस्य चिदात्मस्वरूपस्य अनादिकालमारभ्य आवरकमात्मज्ञानैकापनोद्यं यदनाद्यज्ञानं तदेव कारणम्।

इदमेवाज्ञानं मामिह न जानामीति व्यवह्रियते । ननु लोके भ्रान्तमेकं विना को वा आत्मानं न जानातीति चेत् । सर्वे भ्रान्ता एव । तत्कथमिति चेत् । अहं ब्राह्मणः, अहं क्षत्रियः, अहं वैश्यः, अहं ब्रह्मचारी, अहं गृहस्थः इत्यादिरूपेण मिथ्याभूतमिमं देहमेव सर्वे जानन्ति । शरीरव्यतिरिक्तमात्मानं न कोऽपि जानाति । अतः सर्वे भ्रान्ता एव ।

ननु लोके केचिच्छास्त्रज्ञाः पौराणिकाश्च देहमनात्मत्वेन मन्यमानाः घटकुड्यसंनिभं देहं विहायान्यमेवात्मानं जानन्ति । हे स्वामिन्,भवद्भिःआत्मानं कोऽपि न जानातीति कथमुच्यत इति चेत् । हे पुत्र, तेऽपि परमार्थमात्मानं न जानन्ति । किन्तु कर्तारं भोक्तारं परिच्छिन्नं, लोकान्तरगामिनं चिदाभासरूपं व्यावहारिकं जीवात्मानमेव आत्मत्वेन जानन्ति । तं विना अकर्तारं, अभोक्तारं, अपरिच्छिन्नं, अचलं चिद्रूपं पारमार्थिकं आत्मानं न जानन्ति ।

इदमज्ञानं केनागच्छतीति चेत् । अनादित्वेन वेदेषु शास्त्रेषु च प्रसिद्धत्वादस्य कारणं वक्तुं न शक्यते । तर्हि तस्याज्ञानस्य आदिर्नास्ति चेदन्तोऽपि नास्तीति निश्चयः । तथा चेज्जीवस्य मुक्तिरपि न स्यादिति चेत् । शृणु । अज्ञानस्यादेरभावेऽपि

अन्तोऽस्त्येव । लोके केषांचित्पदार्थानामादेरभावेऽप्यन्तोऽस्ति । केषांचिदन्ताभावेऽप्यादिरस्ति । तत्कथमिति चेत् । प्रागभावस्यादिर्नास्ति । अन्तोस्ति । प्रध्वंसाभावस्यान्तो नास्ति । आदिरस्ति । किंच वातपित्तश्लेष्मजन्यव्याधेर्मूलाज्ञानेऽपि वैद्यशास्त्रोक्तैरौषधैर्यथा निवृत्तिर्दृश्यते,तथा अज्ञानस्य मूलाज्ञानेऽपि वेदान्तशास्त्रोक्तवाक्यजन्यज्ञानेनाऽज्ञानं विनश्यति इति सिद्धान्तः । तथा हि तदज्ञानं न सत् । नासत् । नापि सदसत् । न सावयवम् । न निरवयवम् । नोभयात्मकम् । न भिन्नम् । नाभिन्नम् । नापि भिन्नाभिन्नम् । किंत्वनिर्वचनीयम् । तत्कथमिति चेत् । तत्त्वज्ञानेन बाधितत्वान्न सत् । शशविषाणनरविषाणगगनारविन्दवत् असदपिन । अहमज्ञ इति सर्वैरनुभूयमानत्वात् । नापि सदसत् । परस्परविरोधात् । स्थूलाकाशः सूक्ष्मः । तस्मादपि सूक्ष्मः अपञ्चीकृतः आकाशः । तस्मादपि सूक्ष्मा गुणाः । तेभ्योऽपि सूक्ष्ममज्ञानम् । तस्मादपि सूक्ष्मस्यापि मूलकारणत्वादज्ञानं न सावयवम् । स्थूलपदार्थजगदाकारेण परिणामान्न निरवयवम् । अन्योन्यविरोधान्नोभयात्मकम् । आत्मनो भिन्नमिति चेत् । अद्वैतविरोधात्, आत्मसत्तातिरिक्तसत्ताभावाच्च न भिन्नम् । अभिन्न-

मिति चेत् । आत्मशक्तित्वाभावप्रसङ्गात्, "परास्य शक्तिर्विविधैव श्रूयते" इति श्रुतिविरोधाभावाच्च तदपि न संभवति। किंच आत्मनो जडत्वं वा मायाया वा चेतनत्वं स्यात्। आत्मनोऽविद्यादिनाम्ना च भवितव्यम्। आत्मनः सच्चिदानन्दस्वरूपस्य अनृतजडदुःखमपि स्यात्। तस्मान्नाभिन्नाभिन्नयोर्विरोधात् नोभयात्मकम्। तस्मादज्ञानमनिर्वचनीयमेव ।

एवंभूतादनादेरज्ञानादविवेकः। तस्मादभिमानः। तस्माद्रागद्वेषादिः । तेन कर्म । कर्मणा शरीरम् । तस्माद्दुःखं सांसारिकमात्मनोऽज्ञानात्परम्परयाभवतीति ज्ञातव्यम् । तर्हि एतद्दुःखं कदा गमिष्यतीति चेत् । शरीरे गते सति दुःखं गमिष्यति । शरीरं च कर्मणि नष्टे सति नश्यति । कर्मच रागद्वेषादौ नश्यति सति नश्यति । रागद्वेषादिश्च अभिमाने नष्टे सति नश्यति । अभिमानश्च अविवेके नश्यति सति नश्यति । अविवेकश्चाऽज्ञाने नश्यति सति नश्यति। अज्ञानं चाऽद्वैतब्रह्मस्वरूपस्यात्मनः स्वस्य दृढनिश्चयरूपेण ब्रह्मैवाहमहं ब्रह्मास्मीति महावाक्यजन्यज्ञानेन विनश्यति । नान्येनेति ज्ञातव्यम् ।

ननु ब्रह्महत्यादिमहापातकान्यपि प्रायश्चित्तरूपसत्कर्मभिर्निःशेषं नश्यन्ति । तादृशकर्मशक्त्या अल्पं

मिथ्याभूतमिदमज्ञानं किमिति न गच्छेदिति चेत् । कर्मणोऽज्ञानस्य च विरोधो नास्ति । कर्म अज्ञानं वर्धयति । यथामावास्यान्धकारं मेघावरणं वर्धयति तथा कर्म अज्ञानं वर्धयति । न निवर्तयति । तमन्धकारं सूर्यो यथा निवर्तयति तथा अज्ञानं ज्ञानमेव निवर्तयेत् न कर्म ।

ननु त्रिविधकरणजन्यं कर्म । विज्ञानस्याप्यन्तःकरणजन्यवृत्तित्वेन कर्मत्वात् तत्कथमज्ञानं नाशयेदिति चेत् । शृणु । सत्यं वृत्तिर्मानसं कर्मैव । सा वृत्तिर्ज्ञानस्याज्ञाननिवर्तने रूपग्रहणे नेत्रवदुपाधिभूतैव । न स्वयं निवर्तिका । ज्ञानं तु नित्यम् । तज्ज्ञानं स्वरूपज्ञानं वृत्तिज्ञानमिति द्विविधम् । सुषुप्तावज्ञानप्रकाशकं ज्ञानं स्वरूपज्ञानम् । जाग्रत्स्वप्नयोर्विषयप्रकाशकं वृत्तिज्ञानम् । यथा आदित्येन प्रकाश्यमाने कुड्ये अनेकदर्पणादित्यदीप्तयश्च तासां मध्ये मध्यगतादित्यदीप्तिश्च तथा जाग्रत्स्वप्नयो वृत्तिज्ञानप्रकाशः सुषुप्तौ स्वरूपज्ञानप्रकाशश्चेति ज्ञेयम् ।

तर्हि जाग्रत्स्वप्नयोःस्वरूपज्ञानं नास्तीति चेत् । स्वरूपज्ञानं सर्वास्वप्यवस्थास्वस्ति । वृत्तयःसुषुप्तौ न सन्ति । वृत्तयः सर्वा अप्यन्तःकरणधर्माः । ज्ञान-

मात्मस्वरूपम्। तत्स्वरूपभूतं ज्ञानं वृत्तिषु प्रविश्याऽज्ञानं नाशयति । केवलं बुद्धिवृत्तिरज्ञानं नाशयितुं नष्टा। तस्मादात्मनोऽज्ञानमपि आत्माकारवृत्तिप्रविष्टेन स्वरूपज्ञानेनैव विनाश्यम्। न बुद्धिवृत्त्या कर्मकोटिसहस्रेणापि विनाश्यम्। यथा सत्कर्मैव पापकर्म नाशयति। एवं वृत्तिज्ञानमेव अज्ञानं नाशयति। यथा माणिक्यं शिलारूपमपि प्रकाशयुक्तत्वेन रत्नदीपमितिव्यवह्रियते, एवं वृत्तिज्ञानस्यापि मनोवृत्तिरूपत्वेऽपि स्वप्रविष्टस्वरूपज्ञानयुक्तत्वात् ज्ञानमिति व्यवहारो गौणः न कर्मे ति व्यवहारः।

ननु सुषुप्तौ स्वरूपज्ञानस्य अज्ञानप्रकाशकत्वे विरोधाभावात् कथं ज्ञानमज्ञानं नाशयेदिति चेत्। स्वरूपज्ञानस्य अज्ञानेन विरोधाभावेऽपि वृत्तिज्ञानस्याज्ञानेन विरोधोऽस्ति। वृत्तौ प्रविष्टस्यापि ज्ञानस्य स्वरूपज्ञानत्वात् कथमज्ञानेन विरोध इति चेत्। तृणादेः प्रकाशकत्वेनादित्यकिरणस्य तेन विरोधाभावेऽपि सूर्यकान्तप्रविष्टस्य तस्यैव यथा तृणादिदाहकत्वेन तेन विरोधः, तथा स्वरूपज्ञानस्य केवलस्य ज्ञानेन विरोधाभावेऽपि वृत्तिप्रविष्टस्य तस्य अज्ञानेन विरोधोऽस्ति।

ननु वृत्तिज्ञानेन अज्ञानतत्कार्यनाशेऽपि वृत्ते-

स्तत्र प्रविष्टज्ञानस्यापि विद्यमानत्वात्कथमद्वैतं सिध्येत् । कतकरजोन्यायेन वृत्तिज्ञानास्याप्यज्ञानं तत्कार्यं च निवर्तयित्वा स्वमपि स्वयमेव निवर्तयेत्। वृत्तिनाशे सति वृत्तौ प्रतिबिम्बितं ज्ञानमपि बिम्बभूतं स्वरूपज्ञानमेव गच्छति । ततोऽद्वैतमात्मस्वरूपमेवावतिष्ठते । एवं ज्ञानेनैवाज्ञानस्य विनाशः ।

एवं भूतमज्ञानमात्मविचारेणैव गच्छति । न तु कर्मभिः । न योगोपासनया वा । ज्ञानं वस्तुतन्त्रम् । अत एव कर्तुमकर्तुमन्यथाकर्तुमशक्यम् । उपासनयोगौ च पुरुषतन्त्रत्वात्कर्तुमकर्तुमन्यथाकर्तुं शक्यौ। ताभ्यां चित्तैकाग्र्यमणिमाद्यैश्वर्यं च साध्यते । न तु ज्ञानम्। उपासनयोगयोर्मनोव्यापाररूपत्वात्क्रियात्मकौ । न वस्तुतन्त्रौ । तस्माद्वस्तुतन्त्रं ज्ञानं कर्मणा नायाति । किं तु विचारेणैव साध्यम्। शालिग्रामः रत्नं स्वर्णमित्यादिवस्तुनिर्णयो लक्षणपरीक्षाभ्यां निघर्षणेन च कर्तव्यः । न तु स्नानसन्ध्यावन्दनप्राणायामादिना कस्यापि साध्यमिति निश्चयः । एवमात्मज्ञानमपि आत्मानात्मविचारं विना उपासनादिभिः साधितुं न शक्यते ।

तस्मान्मुमुक्षुरितरव्यापारं विहाय श्रवणमननाभ्यां सदा आत्मानात्मविचारमेव कुर्यात् । य एवं

तदेकपरः सः अस्मिन्नेव जन्मनि संसारबन्धाद्विमुक्तः सन्, विदेहमुक्तिं जीवन्मुक्तिं च प्राप्नोति इति सकलवेदान्ता घुष्यन्ति । एवं मयोक्तं हे पुत्र, तत्त्वं विश्वासेन गृहीत्वा चिन्मात्रेण तिष्ठ। न तु कदाचिदपि कर्तृत्वादिरूपेण तिष्ठ ।

इति मनने षष्ठवर्णकं समाप्तम् ।

## अथ सप्तमं वर्णकम् ।

इतः परमस्मिन्सप्तमवर्णके आत्मानात्मविवेकः तत्साध्यमात्मज्ञानं ब्रह्मकैवल्यं च कथ्यते । आत्मानात्मविवेकेन आत्मज्ञानं जायत इति खलूक्तम् । स आत्मा क इति चेत् । शृणु । आत्मा शरीरत्रयविलक्षणः अवस्थात्रयसाक्षी पञ्चकोशव्यतिरिक्तः सच्चिदानन्दलक्षणः । अनात्मा तु शरीरत्रयम् । तस्य किं लक्षणमित्युक्ते अनृतजडरूपत्वम् । तच्च व्यष्टिसमष्ट्यात्मकम् । समष्टिव्यष्टिलक्षणं प्रथमवर्णके उक्तम् । अत्राप्युच्यते । वनमिव समष्टिः । वृक्ष इव व्यष्टिः । समस्तं समष्टिः । व्यस्तं व्यष्टिः । एवं शरीरत्रयमपि व्यष्टिसमष्ट्यात्मकम् । तत्कथमिति चेत् । समष्टिस्थूलशरीरं समष्टिसूक्ष्मशरीरं समष्टिकारणशरीरमिति,व्यष्टिस्थूलशरीरं व्यष्टिसूक्ष्मशरीरं व्यष्टिकारणश-

रीरमिति च शरीरत्रयमपि समष्टिव्यष्टिरूपेण षट्प्रकारम् । आत्मनः समष्ट्युपाधिना ईश्वरत्वम्। व्यष्ट्युपाधिना जीवत्वम् । न तु वास्तवम् । आत्मन एकत्वात् । आत्मनो मायोपाधिना ईश्वरत्वम् । अविद्योपाधिना जीवत्वम् । न तु वास्तवमिति यावन्न जानाति तावद्ग्रन्थविमुक्तिर्दुःखनिवृत्तिश्च नायाति । 'जीवेशावभासेन करोति।माया चाविद्या च स्वयमेव भवति' इति सकलजीवमाता श्रुतिश्च एवमेवोपदिशति ।

ईश्वरस्य समष्टिकारणशरीरे अभिमानो नास्ति । कुत इति चेत् । तदा महासुषुप्तावहंकारस्य लीनत्वेन अभिमानकारणाभावात् । अयं समष्टिकारणोपाधिक ईश्वरःअव्याकृतः अन्तर्यामीति चोच्यते । अयमुक्तो भक्तैर्जीवैरुपास्यते । अस्योपासनायामशक्तानां श्रुतिः समष्टिसूक्ष्मशरीरोपाधिकमीश्वरमुपासीत इत्युपदिशति । तस्य हिरण्यगर्भः, सूत्रात्मा, महाप्राणः, इति नामानि सन्ति । अस्यापि हिरण्यगर्भस्य सूक्ष्मशरीरे अभिमानोऽस्ति वा न वेति चेत् । तदा स्वप्नावस्थानादभिमानाश्रयस्थूलशरीरप्रवेशाभावात् सूक्ष्मशरीरेऽप्यभिमान ईश्वरस्य नास्ति ।

अस्य सूक्ष्मोपाधेरीश्वरस्य उपासनायामशक्ताञ्जीवान् प्रति समष्टिस्थूलोपाधिकस्येश्वरस्य उपासनां

श्रुतिर्विधत्ते। तस्येश्वरस्य विराट्, वैराजः, वैश्वानरः,-इति नामानि सन्ति। अस्याप्यस्मिन् स्थूलसमष्टिशरीरे ऽभिमानोऽस्ति वा न वेति विचार्यमाणे नास्ति। कथमिति चेत्। सकलजीवशरीराणामप्येकीभूयास्य शरीरत्वेनावस्थानात्। अहमिति व्यावर्तनीयप्रतियोग्यभावात्।

एतच्छरीरोपाहितसमष्ट्या ईश्वरमुपासितुमशक्तानामपि श्रुतिः राजससात्त्विकतामसमूर्तिसहितस्य सृष्टिस्थितिसंहारकर्तुः ब्रह्माविष्णुरुद्रनामधेयस्य दुष्टनिग्रहशिष्टपरिपालनाय मत्स्यकूर्मादिव्यवहारकर्तुरीश्वरस्य उपासनां विधत्ते।

एवं ब्रह्मादिमूर्तिधरस्य ईश्वरस्य तत्तन्मूर्तावभिमानोऽस्ति वा न वेति चेत्। अभिमानोऽस्ति। अभिमानाभावे तत्तन्मूर्त्या सृष्ट्यादिकं कार्यं कर्तुं न शक्यते। अतोऽभिमानोऽस्त्येव। ईश्वरस्यापि जीववदभिमाने सति जीवादीश्वरस्य को विशेष इति चेत्। विशेषोऽस्ति। कथमिति चेत्। जीवानां स्वस्वदेहेषु अहंता च ममता च संततमस्ति। ईश्वरस्यतु स्वमूर्त्यभिमानः कृपया लोकरक्षणार्थं तत्कार्यसमय एव ईश्वरेण केवलं कल्प्यते। नटेन स्वभूमिका-

यामिवेति जीवाभिमानस्य ईश्वराभिमानस्य चास्ति महान् भेदः ।

मूर्तिस्वरूपमीश्वरमुपासितुमशक्तानां शास्त्रं मूर्तिरूपेण कल्पिततताम्रादिप्रतिमोपासनां विधत्ते । अत एव प्रतिमां केचिदीश्वरबुद्ध्या उपासते । सर्वत्र ब्रह्मादिमूर्तिष्वपि तत्तत्प्रतिमास्वपि अन्तर्यामी परमेश्वर एक एव तत्र स्थित्वा तेषामुपासकानां फलं ददाति। मूढाः ईश्वरस्य सर्वात्मकत्वमविचार्य तत्रतत्रेश्वराः बहवो भिन्नभिन्नतया वर्तन्त इति मत्वा अन्योन्यं कलहायन्ते । तस्मादन्तर्यामी ईश्वरः एक एवेति जानीहि । तर्हि सर्वत्रेश्वरस्यैकत्वे शास्त्रमपि तत्तन्मूर्तिभेदमङ्गीकृत्य तदुपासनाभेदं कथं विधत्ते इति चेत् । बहिर्मुखानपि शनैःशनैरन्तर्मुखान्कृत्वा परमात्मैव जीवात्मा नान्य इति बोधयित्वा तेषां मुक्तिं दातुमेव अनादिकालमारभ्य प्रवृत्तं भेदमङ्गीकृत्य तेषां बुद्धिमनुसृत्य भेदेन शास्त्रमुपासनां विधत्ते । न तु तात्पर्येण । एवमीश्वरस्य परमात्मनः समष्टित्रयशरीरोपाधिना ईश्वरत्वसिद्धिप्रकार उक्तः ।

अथेदानीमेकस्यैव परमात्मनः व्यष्टिशरीरत्रयोपाधिना जीवत्वसिद्धिप्रकार उच्यते । व्यष्टिकारणशरीरोपहितस्य परमात्मन एव प्राज्ञः पारमार्थिकः,

अविद्यावच्छिन्नः, इति नामानि सन्ति। व्यष्टिसूक्ष्मशरीरोपहितस्य परमात्मनस्तैजसः, स्वप्नकल्पितः, प्रातिभासिकः, इति नामानि सन्ति। व्यष्टिस्थूलशरीरोपहितस्य परमात्मनो विश्वः, व्यावहारिकः, चिदाभासः, इति नामानि सन्तीति जानीहि।

अस्य जीवस्य शरीरत्रयमपि किमर्थमिति चेत्। प्रयोजनमस्ति। अन्तःकरणप्रतिबिम्बो जीवः। अतो जीवस्य सूक्ष्मशरीरं प्रथममावश्यकम्। पश्चात्स्थूलशरीरं विना कर्मकर्तृत्वाभावात् स्थूलशरीरमप्यावश्यकम्। इदं कार्यशरीरद्वयमपि कारणशरीरं विना अवस्थातुमशक्यम्। अतः कारणशरीरमप्यावश्यकम्। एवं जीवस्य व्यष्टिशरीरत्रयमप्यावश्यकम्।

अस्य जीवस्य अस्मिन्व्यष्टिशरीरत्रयेऽभिमानोऽस्ति वा न वेति विचार्यमाणेऽभिमानोऽस्ति। कथमिति चेत्। जीवस्य कर्मकर्तृत्वेन शरीराभिमानाभावे जीवस्य तत्कर्मकर्तृत्वं नोपपद्यते। तदभावे शरीरमेव नोत्पद्यते। शरीराभावे जीवत्वमेव न संभवति। तस्माज्जीवस्याभिमानोऽस्ति। एवं परमात्मा एक एव व्यष्टिसमष्ट्युपाधिभ्यां जीवेश्वरभावं गतः। अस्य दृष्टान्तोऽस्ति वेति चेत्॥ यथा एकस्यैव देवदत्तस्य पुत्रपौत्रोपाधिभ्यां पितेति पितामह इति

नामद्वयमस्ति, तथा अविद्यामायोपाधिभ्यां आत्मन एकस्यैव जीवेश्वरत्वमागतम् ।

ननु पूर्वोक्तदृष्टान्ते नामद्वयं युज्यते । किंचिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टभेदस्य को वा दृष्टान्त इति चेत् । दृष्टान्तोऽस्ति । एकमेव जलं बृहत्तटाकस्थं सत् एकग्रामसंरक्षणमहाशक्तिमत् घटस्थं सत् एकगृहसंरक्षणाल्पशक्तिमद्यथा जातम्, अग्निरेक एव स्थूलमहावर्तिस्थः सन् बहुदूरप्रकाशकमहाशक्तिमान् अल्पवर्तिस्थः सन् ग्रहमात्रप्रकाशकाल्पशक्तिमांश्च यथा जातः, तथा आत्मनोऽपि बृहत्कारणभूतमायोपाधिना सर्वज्ञत्वम्, अल्पेन कार्यरूपाविद्योपाधिना किंचिज्ज्ञत्वं चागतम् । न तु सर्वज्ञात्मा किंचिज्ज्ञात्मेत्यात्मद्वयमस्ति । अत एव वेदान्तशास्त्रं च तत्पदस्य त्वंपदस्य च संबन्धत्रयेणाप्यखण्डतां बोधयति ।

संबन्धत्रयं किमिति चेत् । पदयोः सामानाधिकरण्यसंबन्धः । पदार्थयोर्विशेषणविशेष्यभावः संबन्धः । पदाभ्यां सह वा पदार्थाभ्यां सह वा प्रत्यगात्मनो लक्ष्यलक्षणभावः संबन्धः । एवं संबन्धत्रयम् । अस्य दृष्टान्तः । सोऽयं देवदत्त इत्यत्र इदं संबन्धत्रयमस्ति । स इति शब्दस्य अयमिति शब्दस्य च एको देवदत्त-

पिण्ड एव समानाधिकरण इति तयोः शब्दयोः सामानाधिकरण्यसंबन्धोऽस्ति। तथा तत्पदस्य त्वम्पदस्य च एकमेव चैतन्यं समानाधिकरणम्। तस्मात्पदद्वयस्यापि सामानाधिकरण्यसंबन्धोऽस्ति। तत्कालतद्देशविशिष्टवाचक स इति शब्दार्थस्य एतत्कालैतद्देशविशिष्टदेवदत्तवाचकायंशब्दार्थस्यापि अन्योन्यभेदव्यावर्तकत्वेन अन्योन्यं विशेषणविशेष्यभावसंबन्धोऽस्ति । तथा सर्वज्ञत्वपरोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदार्थस्य किंचिज्ज्ञत्वापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वंपदार्थस्य च अन्योन्यभेदव्यावर्तकत्वेन अन्योन्यं विशेषणविशेष्यभावः संबंधोऽस्ति। सोऽयंपदयोः पदार्थयोर्वा अखण्डार्थदेवदत्तपिण्डमात्रग्रहणे विरुद्धांशं विहाय अविरुद्धांशदेवदत्तमात्रलक्षकत्वेन लक्ष्यलक्षणभावसंबन्धोऽस्ति। तथा तत्त्वम्पदयोः तत्त्वम्पदार्थयोर्वा अखण्डसच्चिदानन्दमात्रग्रहणे विरुद्धांशं विहाय अविरुद्धांशभूतचैतन्यमात्रलक्षकत्वेन लक्ष्यलक्षणभावसंबन्धोऽस्ति ।

इममेव लक्ष्यलक्षणभावसंबन्धं भागत्यागलक्षणेति जहदजहल्लक्षणेति च जानीहि । तत्कथमिति चेत् । शास्त्रेषु वाक्यार्थग्रहणे मुख्यवृत्तिः गुणवृत्तिः लक्षणावृत्तिरिति वृत्तित्रयमस्ति । राजा गच्छतीति वाक्यार्थे

मुख्यवृत्तिः । नीलमुत्पलमिति वाक्यार्थे, अग्निर्माण-वक इत्यादौ च, गुणवृत्तिः । लक्षणावृत्तिश्च त्रिविधा । जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा चेति । गङ्गायां घोषः प्रतिवसति, शोणो धावति, सोऽयं देवदत्तः इति च क्रमेण लक्षणावृत्तित्रयस्य उदाहरणवाक्यानि । एतेषु मुख्यार्थग्रहणे विरोधात् लक्षणावृत्तिर्गीयत इति ज्ञेयम् ।

तत्त्वंपदयोर्वाक्यार्थः लक्ष्यार्थश्च क इति चेत् । उच्यते । माया मायाप्रतिबिम्बः मायाधिष्ठानं ब्रह्म च त्रयमप्येकीभूय तत्पदवाच्यार्थः । ब्रह्ममात्रं तत्पदलक्ष्यार्थः । अविद्या अविद्याप्रतिबिम्बः अविद्याधिष्ठानसाक्षिचैतन्यं एतत्रितयमप्येकीभूय त्वंपदवाच्यार्थः । साक्षिकूटस्थचैतन्यमात्रं त्वंपदलक्ष्यार्थः । तस्मात्तत्त्वंपदवाक्यार्थग्रहणे वाच्यार्थजीवेश्वरयोर्विरोधात् तयोर्विरुद्धांशं विहाय, अविरुद्धांशब्रह्मचैतन्यस्य कूटस्थचैतन्यस्य च एकत्वात् ब्रह्मकूटस्थौ लक्षयित्वा, अखण्डार्थे तयोरैक्यमेव महावाक्येन बोध्यते । यथा पुत्रपौत्रोपाधिद्वयपरित्यागे पितृपितामहत्वाभावेन एकदेवदत्त एवावशिष्यते, महात्तटाकघटोपाधिपरित्यागे शैत्यद्रवमधुर एवावशिष्यते, महानर्घ्यल्पवर्तिपरित्यागे लोहितोष्णप्रकाशस्वभाव एक एवावशिष्यते

तथा मायाविद्योपाधित्यागे सच्चिदानन्दस्वभावमेकमात्मवस्त्वेवावशिष्यते ।

एवं विचार्य परिपूर्णस्वभावप्रत्यगात्मैव मम स्वरूपम्, अहं ब्रह्मास्मि, ब्रह्मैवाहमस्मि, इत्यनुभवो यस्य महानुभावस्य चागच्छति, स एव मुक्तः, स एव कृतकृत्यः, स एव ब्राह्मण इति सर्वे वेदान्ताः भेरीवाद्यवद्घुष्यन्ति ॥

इति मनने सप्तमवर्णकं समाप्तम् ।

---

## अथ अष्टमवर्णकम् ।

इतः परमात्मनः पूर्वोक्तशरीरत्रयविलक्षणत्वम्, अवस्थात्रयसाक्षित्वं, पञ्चकोशव्यतिरिक्तत्वं, सच्चिदानन्दस्वरूपत्वं च, चत्वारि लक्षणानि चतुर्भिर्वर्णकैरुच्यन्ते। एतेषु शरीरत्रयविलक्षणत्वं पञ्चकोशव्यतिरिक्तत्वं च तद्व्यावृत्तिलक्षणम् । अवस्थात्रयसाक्षित्वं तटस्थलक्षणम् । सच्चिदानन्दस्वरूपत्वं स्वरूपलक्षणम् । तथा आकाशादिशरीरान्तं दृश्यजातं नेति नेतीतिवाक्येन विहायावशिष्टं वस्तु आत्मेत्येतद्व्यावृत्तिलक्षणम्। अस्य प्रपञ्चस्य यदधिष्ठानं तदात्मवस्त्विति तटस्थलक्षणम्। सच्चिदानन्दपूर्णं नित्यमात्मवस्त्विति स्वरूपलक्षणम् ।

अस्मिन्नष्टमवर्णके शरीरत्रयविलक्षणत्वमुच्यते ।

शरीरत्रयस्याज्ञाने तद्विलक्षणत्वमपि दुर्ज्ञेयमिति प्रथमतः शरीरत्रयमुच्यते । स्थूलं सूक्ष्मं कारणमिति शरीरं त्रिविधम् । तत्र सर्वेषां प्रत्यक्षं करचरणाद्यवयवोपेतं स्तम्भवद्वर्तमानं तत्स्थूलशरीरम् । सप्तदशावयवात्मकं सूक्ष्मशरीरम् । अज्ञानमेव कारणशरीरम् । एतेषां शीर्यते क्षीयते इति व्युत्पत्त्या शरीरमिति नाम। इत्थं स्थूलशरीरमन्नाभावे शीर्यते, अन्ने विद्यमाने व्याधिना शीर्यते । तदभावेऽपि वयःपरिणामे शीर्यते । पल्लवमिव सूक्ष्मशरीरमपि कदाचिद्वर्धते कदाचित्क्षीयते । रागद्वेषाद्यन्तःकरणवृत्तिजृम्भणमेव सूक्ष्मशरीरस्य वृद्धिः । तेषां संकोच एव जीर्णता । कारणशरीरस्याप्यहं जीव इति वृद्धिः । अहं ब्रह्मास्मीति संकोचः। अनयोः सूक्ष्मकारणशरीरयोरुक्तरूपा वृद्धिरज्ञानिषु दृश्यते । संकोचश्च ज्ञानिषु दृश्यते । एवं शरीरत्रयस्यापि जराया दर्शनेन शरीरमिति नाम । एतेषां देह इति च नाम दह्यत इति व्युत्पत्त्यागतम् ।

लोके सर्वोऽपिस्थूलदेहोऽग्निना दह्यते । सूक्ष्मशरीरं कारणशरीरं च न कदाचिदप्यग्निना दह्यते । तत्कथमेतेषां देहत्वमिति चेत् । अग्नेरप्यधिकेन तापत्रयेण सर्वमपि दह्यते। अतः शरीरत्रयस्यापि देह इति नाम युज्यते । स्थूलशरीरस्य स्तम्भवत् स्थूलभूत-

कार्यत्वेन स्थूलत्वम् । सूक्ष्मस्य स्थूलशरीरवत् स्थूलत्वाभावात् सूक्ष्मभूतजन्यत्वाच्च सूक्ष्मत्वम् । लीनं शब्दार्थं गमयतीति लिङ्गमिति नाम अस्यागतमिति ज्ञेयम् । स्थूलसूक्ष्मशरीरद्वयकारणस्य कारणशरीरमिति नाम ।

हे स्वामिन्, पूर्वं स्थूलसूक्ष्मशरीरद्वयमपि पञ्चभूतेभ्य उत्थितमित्युक्तम् । तथैवात्मनः शरीरत्वे अज्ञानं कारणमिति, युगपत्सृष्टौ सर्वस्यापीति। इदानीं कारणशरीरादुत्थितमिति कथमुच्यते इति चेत् । शृणु । अध्यारोपसृष्टौ तथा पञ्चभूतोत्थितमित्युक्तम्। तथैवात्मनः शरीरत्वे अज्ञानं कारणमिति युगपत्सृष्टौ सर्वस्यापि जगतोऽज्ञानमेव कारणमिति कृत्वा शरीरद्वयस्यापि अज्ञानमेव कारणमित्युक्तम् ।

कथं क्रमसृष्टिः, कथं वा युगपत्सृष्टिरिति चेत् । उच्यते । मूलप्रकृतिः अविद्या माया आवरणं विक्षेपः आकाशः वायुः अग्निः आपः पृथिवीति क्रमेणोत्पत्तिकथनं क्रमसृष्टिः । स्थूलस्य प्रत्यक्षेणानुभूयमानत्वात्तत्र न संदेहः । सूक्ष्मशरीरस्य बहिरप्रतीतेः तदस्तीति ज्ञानं कथं जायते इति चेत् । शृणु । सप्तदशकरणकार्यैस्तत्सूक्ष्मशरीरं ज्ञातुं शक्यम् । तत्सप्तदशकरणकार्यमपि स्थूलशरीरे कर्तुं न शक्यते इति चेत्

सुषुप्तिमूर्च्छामरणेषु स्थूलशरीरे विद्यमानेऽपि सप्तदशकरणकार्याणामदर्शनात् जाग्रत्स्वप्नयोः तत्कार्यदर्शनात् स्थूलशरीरव्यतिरेकेण सप्तदशावयवात्मकं लिङ्गशरीरमस्त्येवेति अवगन्तव्यम् ।

इदं स्थूलशरीरं सूक्ष्मशरीरं विना न कदाचिदपि कार्यं करोति। अत उभयमपि दर्शनादिकार्यं करोत्विति चेत् । विवेकेन विचार्यमाणे दर्शनादिकार्यं सकलमपि सूक्ष्मशरीरसाध्यमेव । न तु स्थूलशरीरसाध्यम् । कथमिति चेत्।काष्ठमाश्रित्याग्निर्दाहपाकादिकर्म करोति, काष्ठाभावे न करोति। तथाप्यग्निकार्यमेव दाहपाकादि, न तु काष्ठकार्यं यथा तथा स्थूलशरीरमाश्रितेन सूक्ष्मशरीरेण क्रियमाणमपि दर्शनादिकं सूक्ष्मकार्यमेव, न तु स्थूलकार्यम् । अतो दर्शनादिकार्येणानुमेयं सप्तदशावयवं सूक्ष्मशरीरमित्युक्तम् । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्चेतिसप्तदशावयवाः । एतत्सप्तदशाङ्गं सूक्ष्मशरीरम् ।

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि ज्ञानेन्द्रियाणि । शब्दस्पर्शरूपरसगन्धाः एतेषां विषयाः । ज्ञानसाधनत्वात् । ज्ञानेन्द्रियाणि । सुखप्रकाशाभिव्यञ्जकसत्त्वगुणकार्यत्वात् एतेषां ज्ञानसाधनत्वम् । वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि । वचना-

दानगमनविसर्गानन्दरूपक्रियासाधनत्वेन तेषां कर्मेन्द्रियत्वम् । चञ्चलमलिनरजोगुणकार्यत्वेन तेषां क्रियासाधनत्वम् । प्राणापानव्यानोदानसमानाः प्राणाः । उच्छ्वासनिःश्वासादिव्यापारैः शरीरधारकत्वात् बलप्रदत्वाच्च प्राणसंज्ञाः । तादृशसामर्थ्यं च तेषां रजोगुणजन्यत्वादिति ज्ञेयम् । विमर्शान्तःकरणवृत्तिर्मनः । निश्चयात्मकान्तःकरणवृत्तिर्बुद्धिः । एवं सूक्ष्मशरीरस्य सप्तदशावयवाः ।

लोके एकस्मिन्वस्तुनि ज्ञातव्ये उद्देशो लक्षणं परीक्षा चेत्युपायत्रयमस्ति । तत्र वस्तुनामग्रहणमात्रमुद्देशः । वस्तुस्वरूपग्रहणं लक्षणम् । वस्तुस्वरूपविचारः परीक्षा । सप्तदशावयवनामग्रहणमुद्देशो जातः । इतः परं लक्षणं परीक्षां च वदामः । लक्षणं नामाव्याप्त्यतिव्याप्त्यसंभवाख्यदोषत्रयरहितधर्मः । यथा कपिला गौरिति । लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिः । अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः । यथा चतुष्पाद्गौरिति । लक्ष्यमात्रे लक्षणस्यावर्तनमसंभवः । यथा एकशफा गौरिति । दोषत्रयरहितोऽसाधारणधर्मः । गोः सास्नादिमत्त्वं लक्षणम् ।

ज्ञानेन्द्रियाणां किं लक्षणमिति चेत् शृणु । क्रमेण कथयिष्यामः ।

दिगधिष्ठानदेवतया प्रेरितं सत् कर्णशष्कुल्यवच्छिन्ननभोदेशे स्थित्वा अष्टादशभाषाणां वेदशास्त्राणां च इदमित्थमिति ज्ञातृ यदिन्द्रियं तच्छ्रोत्रेन्द्रियम्। परीक्षा कीदृशीति चेत् । कर्णशष्कुल्यवच्छिन्ननभ एव जानात्विति चेत् । सुषुप्तिमूर्च्छादिसमयेऽपि कर्णशष्कुल्यवच्छिन्नं नभो विद्यमानमपि शब्दं न गृह्णाति । तस्मात्तदन्यदिति परीक्षा ।

त्वगिन्द्रियं किमिति चेत् । वायुरूपाधिष्ठानदेवतया प्रेरितं सत् त्वचं सर्वत्र व्याप्य शीतमुष्णं मृदु कठिनं कर्कशमित्यनेकविधं स्पर्शं यज्जानाति तत्त्वगिन्द्रियम् । त्वगेव जानात्वित्युक्ते सुषुप्त्यादिषु त्वचि विद्यमानायामपि स्पर्शं न जानाति।तस्मान्न तत्त्वगिन्द्रियम्।चक्षुरिन्द्रियं किमिति चेत्। सूर्यरूपाधिष्ठानदेवतया प्रेरितं सत् कृष्णताराग्रमाश्रित्य नीलं पीतं श्वेतं रक्तं हरितं धवलं स्थूलं सूक्ष्मं ह्रस्वं दीर्घं इत्युक्तबहुरूपं यज्जानाति तच्चक्षुरिन्द्रियम् । कृष्णताराग्रमेव जानात्विति चेत् । सुषुप्त्यादिषु तद्विद्यमानमपि तद्रूपं न जानाति । तस्मात्तन्न चक्षुरिन्द्रियम् ।

रसेन्द्रियं किमिति चेत् । वरुणरूपाधिष्ठानदेवतया प्रेरितं सत् जिह्वाग्रमाश्रित्य मधुरतिक्ताम्लादिषड्रसान् यज्जानाति तद्रसनेन्द्रियम् । रसनमेव जानात्वि-

ति चेत् । सुषुप्त्यादिषु रसनामात्रं विद्यमानमपि रसं न जानाति । अतः न तद्रसनेन्द्रियम् ।

घ्राणेन्द्रियं किमिति चेत् । अश्विनीदेवतया प्रेरितं सत् नासाग्रमाश्रित्य सुगंधं दुर्गंधं च यज्जानातितद्घ्राणेन्द्रियम्। नासाग्रमेव जानात्विति चेत्।सुषुप्तौ विद्यमानमपि गन्धं नैव जानाति । तस्मान्न तद्घ्राणेन्द्रियम् । एवं ज्ञानेन्द्रियलक्षणानि ।

इतः परं कर्मेन्द्रियलक्षणमुच्यते। अग्निरूपाधिष्ठानदेवतया प्रेरितं सत् तालुमूलमुत्तराधरोष्ठं कण्ठं हृदयं नाभिमेवमादिस्थानान्यधिष्ठानदेवतयाश्रित्य पूर्वोक्तशब्दभेदान्यदुच्चरति तद्वागिन्द्रियम्। सुषुप्तौ तालवादिकं विद्यमानमपि अक्षराणिनोच्चरति।तस्मान्न तद्वागिन्द्रियम्।इन्द्ररूपाधिष्ठानदेवतया प्रेरितं सत् करतलमाश्रित्य आदानादिक्रियां यत्करोति तत्पाणीन्द्रियम्।सुषुप्त्यादौ विद्यमानमपि न करतलं करोति।अतो न तत्पाणीन्द्रियम् । उपेन्द्ररूपाधिष्ठानदेवतया प्रेरितं सत् पादतलमाश्रित्य गमनं यत्करोति तत्पादेन्द्रियम् । सुषुप्त्यादौ विद्यमानमपि पादतलं गमनक्रियां न करोति । अतो न तत्पादेन्द्रियम् । मृत्युरूपाधिष्ठानदेवतया प्रेरितं सत् गुदमाश्रित्य यत्पुरीषविसर्जनादिकं करोति तत्पाय्विन्द्रियम् ।

सुषुप्त्यादौ विद्यमानमपि गुदं न करोति। अतो न तत्पाय्विन्द्रियम्। प्रजापतिरूपाधिष्ठानदेवतया प्रेरितं सत योनिलिङ्गमाश्रित्य शुक्रशोणितमूत्रविसर्जनं यत्करोति तदुपस्थेन्द्रियम्। सुषुप्त्यादौ योनिर्लिङ्गंच विसर्जनं न करोति। अतो न तदुभयमुपस्थेन्द्रियम्। एवं कर्मेन्द्रियलक्षणान्युक्तानि।

## अथ प्राणपञ्चकस्य लक्षणमुच्यते।

विशिष्टनामकाधिष्ठानदेवतया प्रेरितः सन् यो हृदि स्थित्वा उच्छ्वासं करोति स प्राणः। विश्वसृष्टनामकाधिष्ठानदेवतया प्रेरितः सन् गुदे स्थित्वा यो निश्वासं करोति सोऽपानः। विश्वयोनिनामकाधिष्ठानदेवतया प्रेरितः सन्नन्तर्बहिश्च शरीरे स्थित्वा इन्द्रियाणां बलमिच्छन्यो वर्तते स व्यानः। योऽजनामकाधिष्ठानदेवतया प्रेरितः सन् कण्ठे स्थित्वा सुषुप्ताविन्द्रियाणां गोलकेषु लयं कारयित्वा, जाग्रति पुनरिन्द्रियाणि गोलकेषु प्रापयित्वा, उत्क्रमणकाले इन्द्रियाणि गृहीत्वा लोकान्तरं गच्छति स वायुरुदानः। यो जयनामकाधिष्ठानदेवतया प्रेरितःसन् नाभिदेशे स्थित्वा भक्ष्यभोज्यलेह्यचोष्यरूपचतुर्विधान्नं जठराग्नौ पाचयित्वा शरीरपुष्टिं करोति स समानवायुः। एवं पञ्च प्राणाः श्रूयन्ते।

नागकूर्मकृकरदेवदत्तधनञ्जया उपवायवः। तेषामपि पूर्वोक्तपञ्चप्राणेष्वेवान्तर्भावः। तत्र नागो वान्तिं करोति। कूर्म उन्मीलनं करोति निमीलनं च अधरोष्ठयोः संयोगं विभागं च। कृकरः क्षुधं करोति। देवदत्तो विजृम्भणं करोति। धनञ्जयः शरीरस्योच्छूनतां करोति।

इतः परमन्तःकरणचतुष्टयमुच्यते। मनः बुद्धिः चित्तमहंकारः इति जानीहि। अत्र मनश्चन्द्रेणाधिष्ठितं सत् कण्ठमाश्रित्य स्थित्वा संकल्पविकल्पौ करोति। बुद्धिश्चतुर्मुखेनाधिष्ठिता सती मुखमाश्रित्य स्थित्वा निश्चयं करोति। अहंकारो रुद्रेणाधिष्ठितः सन् हृदयमाश्रित्याभिमानं करोति। चित्तं क्षेत्रज्ञरूपविष्णुनाधिष्ठितं सत् नाभौ स्थित्वा अवधारणं करोति। एतल्लिङ्गशरीरम्। तत्र काचिच्छ्रुतिः षोडशात्मकं वदति। तत्पक्षेऽन्तःकरणमेकमिति जानीहि। पुनरन्या श्रुतिः सप्तदशात्मकं वदति। तस्मिन् पक्षे मनो बुद्धिरिति द्विविधं जानीहि। पुनरन्या श्रुतिरेकोनविंशात्मकं वदति। तत्पक्षे मनः बुद्धिः अहंकारश्चित्तमिति जानीहि। एवं चतुर्विधमन्तःकरणं लिङ्गशरीरमिति निर्णयः।

इदानीं कारण शरीरमुच्यते। अज्ञानमेव कारणशरीरम्। स्थूलशरीरकारणत्वात्। अस्य जीवेश्वरयोः

प्रथमशरीरत्वात् । पश्चाद्भाविशरीरकारणत्वम् । तस्मिन्नर्थे प्रमाणं किमिति चेत् । अज्ञानं कारणशरीरमिति श्रुतिर्वदति । कार्येण कारणमूह्यत इति युक्तिः । अहमज्ञ इत्यनुभवः ।

हे स्वामिन्, आत्मा क इत्युक्ते शरीरत्रयविलक्षण इति बोधयितुं प्रथमतः शरीरत्रयं लक्षणैर्बोधयितव्यं किल,एवमेवात्मापि लक्षणैर्बोधयितव्य इति चेत्।शृणु। सर्वत्र परिपूर्णं ब्रह्म। तदेव प्रत्यगात्मस्वरूपमिति सकलोपनिषदो वदन्ति । तस्मादात्मा सच्चिदानन्दस्वरूप एवेति जानीहि । सत् किं, चित् किं, आनन्दं किमिति चेत् । बाधरहितं सत् । स्वप्रकाशं चित् । स्वानुभूतिरेवानन्द इति जानीहि । एवमात्मा सच्चिदानन्दस्वरूपः। अनात्मा तु अनृतजडदुःखस्वरूपः।

आत्मानात्मनोरन्योन्यवैलक्षण्यं कथं ज्ञातव्यमिति चेत् । यथा पुरुषलक्षणं स्त्रियां नास्ति, स्त्रीलक्षणं पुरुषे नास्ति, एवमेव सल्लक्षणमनृते नास्ति । अनृतलक्षणं सति नास्ति । यथा प्रकाशलक्षणमन्धकारे नास्ति, अन्धकारलक्षणं प्रकाशे नास्ति, एवं चिल्लक्षणं जडे नास्ति, जडलक्षणं चिति नास्ति । यथा चन्द्रिकालक्षणमातपे नास्ति, आतपलक्षणं च-

न्द्रिकायां नास्ति, एवमानन्दलक्षणं दुःखे नास्ति, दुःखलक्षणमानन्दे नास्ति ।

सच्चिदानन्दानां अनृतजडदुःखानां च विस्तारेण लक्षणानि ज्ञातव्यानीति चेत् । शृणु । वदामः । कालत्रयेऽपि केनाप्यबाध्यमानमेकरूपं सत् । कालत्रयेऽपि मिथ्याभूतमपि सत्यमिव भासमानं विचार्यमाणे बाध्यमानमसत् । अस्य दृष्टान्तः । अमन्दान्धकारे वर्तमाना रज्जुः स्वारोपितसर्पमालधनीरन्ध्रजलधारादिवदबाध्यमाना भ्रान्तेः पूर्वकाले पश्चात्काले भ्रान्तिकाले च एकरूपा वर्त्तते । अध्यस्तसर्पादि तु कालत्रयेऽपि स्वयं मिथ्याभूतमविद्यमानमपि विद्यमानमिव प्रतीयते । प्रमातुः परमार्थविचारेण बाध्यते । एवंभूतरज्जुलक्षणं सर्पादौ नास्ति । अतः अन्योन्यं शब्देनार्थेन लक्षणेन प्रतीत्या व्यवहारेण पञ्चभिः प्रकारैर्वैलक्षण्यं यथानयोरस्ति तथा सल्लक्षणमसल्लक्षणे देहादिप्रपञ्चे नास्ति, असल्लक्षणं च प्रत्यगात्मनि नास्ति । तस्मादन्योन्यं शब्देनार्थेन प्रतीत्या लक्षणेन व्यवहारेण च पञ्चभिः प्रकारैर्वैलक्षण्यमस्ति । तस्मादेवं विचार्य सतः अनृतस्य च वैलक्षण्यं जानीहि ।

चितो जडस्य वैलक्षण्यमुच्यते।सूर्यादिप्रकाशमन-

पेक्ष्यस्वप्रकाशेनेवप्रकाशमानं स्वारोपितस्यजडस्यापि प्रकाशकं,अत एव सूर्यादिप्रकाशपदार्थं मृच्छिलाद्यप्रकाशपदार्थं च प्रकाशयति यद्वस्तु तच्चित्।जडलक्षणं कीदृशमिति चेत्। स्वयमप्रकाशमानमन्यपदार्थस्य प्रकाशनेऽसमर्थं यत्तज्जडम्। अत्रोभयदृष्टान्तः। यथा आदित्यः प्रकाशान्तरानपेक्षं स्वयमेव प्रकाशमानः सन् स्वप्रकाशसंबन्धिघटपटादिपदार्थमपि प्रकाशयति। तथा चित्प्रकाशः। यथा घटादिपदार्थः स्वयमप्रकाशमानःअन्यपदार्थमपि प्रकाशयितुमसमर्थः तथा जडवस्त्वपीति जानीहि।यथा आदित्यस्य घटादेश्च शब्दादिपञ्चप्रकारैर्वैलक्षण्यं, एवं चितो जडस्य च वैलक्षण्यम्।

एवं ज्ञानस्य किं फलमिति चेत्। लोके प्रकाश्यपदार्थनिष्ठविकाराः प्रकाशकवस्तु कालत्रयेऽपि न स्पृशन्ति इति ज्ञानं फलम्। तदपि कथमिति चेत्। आदित्येन प्रकाश्यमानघटादिनिष्ठच्छिद्रेण हानिः अच्छिद्रेण लाभः,स्पर्शेन त्याज्यत्वं,अस्पर्शेन ग्राहकत्वं, लक्षणेन हर्षः, अलक्षणेन विषादः, समीचीनतया अतिशयः, असमीचीनतया अनतिशयः, इत्यादिविकारगुणाःप्रकाशकमादित्यं न स्पृशन्ति। एवमात्मप्रकाश्यमानदेहेन्द्रियादिनिष्ठनामरूपजातिवर्णाश्र-

मप्रवृत्तिनिवृत्तिविधिनिषेधपञ्चभावविकारषड्भूर्मिशङ्क्रोशा-न्यपैत्यादिसकलगुणविकाराश्च प्रकाशकमात्मानं कालत्रयेऽपि किञ्चिदपि स्प्रष्टुं न शक्नुवन्ति इति ज्ञानं सुकरमिति जानीहि। एवं चिज्जडयोर्वैलक्षण्यम्।

इतः परमानन्दस्य दुःखस्य च वैलक्षण्यमुच्यते।

आनन्दलक्षणं किमिति चेत्। निरुपाधिकं निरतिशयं नित्यं यत्सुखं तदानन्दः।

दुःखलक्षणं किमिति चेत्। प्रतिकूलतया वेदनीयत्वम्। इतरेच्छानधीनेच्छाविषयभिन्नत्वे सति द्वेषविषयत्वं वा। तत्तु त्रिविधम्। आध्यात्मिकं आधिभौतिकं आधिदैविकं चेति। तत्रेन्द्रियैर्देह एव वातपित्तश्लेष्मवैपरीत्येन जायमानं व्याध्यादिदुःखमाध्यात्मिकम्। भूतैर्भौतिकैश्च सर्पव्याघ्रादिभिर्जायमानं दुःखमाधिभौतिकम्। दैवैर्जायमानमतिवृष्टयनावृष्टिविद्युत्पातादिदुःखमाधिदैविकमिति।

आनन्दस्य दुःखस्य च को दृष्टान्त इति चेत्। उच्यते। यथामृतं सुखरूपं सत् स्वमनुभवतो जीवानपि सुखयति, कालकूटविषं स्वयं तापकं सत् स्वमनुभवतो जीवानपि पीडयति। एवंभूतयोरमृतविषयोरन्योन्यं शब्दादिपञ्चप्रकारैर्यथा वैलक्षण्यम्। एवमानन्दलक्षणं यथा तापत्रयात्मकदुःखे नास्ति,

दुःखलक्षणमपि आत्मस्वरूपे आनन्दे नास्ति। तस्मा-
च्छब्दादिपञ्चप्रकारैरनयोर्वैलक्षण्यं जानीहि । अत्र
निष्कृष्टार्थः सिद्धार्थः क इति चेत् । रज्जुवत्सद्रूपः ।
आदित्यवच्चिद्रूपः अमृतवदानन्दरूपः अहंशब्दार्थ
आत्मासर्पवदनृतात्, घटवज्जडात्, विषवद्दुःखात्
देहेन्द्रियादिप्रपञ्चाद्विलक्षण इति यो गुरुमुखादात्मानं
जानाति स एवासङ्गः, स एवकृतकृत्यः, स एव मुक्त
इति सकलवेदान्तनिश्चय इति जानीहि ॥

इति वासुदेवमननेऽष्टमवर्णकं समाप्तम् ।

---

## अथ नवमवर्णकम् ।

आत्मा शरीरत्रयविलक्षणःअवस्थात्रयसाक्षी।पञ्च-
कोशव्यतिरिक्तः सच्चिदानन्दलक्षणः इत्यात्मन उक्तेषु
चतुर्विधलक्षणेषुशरीरत्रयविलक्षणत्वमष्टमवर्णकेउक्तम्
इतःपरमवस्थात्रयसाक्षित्वमस्मिन्नवमवर्णके उच्यते ।
मनः सत्त्वरजस्तमोगुणात्मकम् । तथापि सत्त्वगुण-
प्रधानमेव मनः । सात्त्विकेनैव मनसा आत्मा ज्ञातव्यः।
न च राजसेन नापि तामसेन । तत्र सत्त्वगुणः सूक्ष्मः।
रजोगुणश्चञ्चलः । तमोगुणः स्थूलः । तस्मात्सूक्ष्मप्रवे-
शयोग्ये बृहत्स्तम्भो यथा न प्रविशति । वायुना
चालितदीपप्रकाशे सूक्ष्मवर्णो निर्णेतुं यथा न शक्यते,

तथैवात्मनि ज्ञातव्ये सति सूक्ष्ममनसैव सात्त्विकेन ज्ञातव्यः। अन्यथा स्थूलमनसा चञ्चलमनसा च सूक्ष्मस्यात्मनः स्वरूपं किञ्चिदपि न ज्ञायते। तस्मात्सावधानेन शृणु।

आत्मनोऽवस्थात्रयसाक्षित्वं कथमिति चेत्। शृणु। अवस्थात्रयं च जाग्रदवस्था, स्वप्नावस्था, सुषुप्त्यवस्था चेति। तेषु सकलेन्द्रियैर्बाह्यार्थोपलम्भो जाग्रदवस्था। जाग्रद्वासनया अन्तःकरणस्य भोक्तृत्वभोग्यत्वादिपरिणामःस्वप्नावस्था। स्थूलसूक्ष्मजगदन्तःसर्वस्यापिकारणेऽज्ञाने लयानन्तरं अज्ञानमात्रस्य केवलसाक्षिवेद्यस्यावस्थानं सुषुप्तिः।

एवमवस्थात्रयसाक्षित्वमात्मनः कथमिति चेत्। आत्मनि साक्षिलक्षणस्य विद्यमानत्वादिति ब्रूमः। साक्षिलक्षणं कथमिति चेत्। लोके एकस्य पुरुषस्य अन्यदीयावस्थाया अवस्थाव्यापाराणां अन्यस्य तस्य च अवस्थावतः विनाशराहित्येन साक्षाद्द्रष्टृत्वं साक्षित्वम्। यथा तूष्णीमवस्थितस्य संन्यासिनः तत्रागतपुरुषतदवस्थातद्व्यापाराणां निर्विकारेण साक्षाद्द्रष्टृत्वं साक्षित्वम्। आत्मापिजीवानामवस्थात्रयमवस्थाव्यापारांश्च अवस्थावतो जीवांश्च साक्षात्पश्यन्नपि निर्विकारेणावतिष्ठते।

इदमेव साक्षित्वं दृष्टान्तपूर्वकं पुनरपि कथ्यते-शृणु । एकमहानगरवज्जाग्रदवस्था । तत्र प्राकारवत्स्वप्नावस्था । तदन्तःप्रासादवत्सुषुप्त्यवस्था । तत्र तदभिमानिप्रभुवत् अवस्थात्रयाभिमानी जीवः । यथा स प्रभुः प्राकाराद्बहिर्वर्तमानाप्रियाप्रिये अनुभूय हर्षं विषादं च प्राप्य ततः प्रासादे आगत्य सर्वान्व्यापारान्विहाय तूष्णीं स्त्रिया सह सुखमनुभवन्नास्ते, एवं जीवात्मापि स्थूलशरीराभिमानी जाग्रद वस्थायां त्रिविधकरणव्यापारयुक्तःसन् विश्वो भूत्वा, सूक्ष्मशरीराभिमानी स्वप्नावस्थायां मनोमयत्रिविधकरणैर्गुणदोषव्यापारादियुक्तःसन् तैजसो भूत्वा, पश्चात्कारणशरीराभिमानी सन् सुषुप्त्यवस्थायां त्रिविधकरणगुणमुपसंहृत्य प्राज्ञो भूत्वा नित्यानन्दमनुभवन्नास्ते । एवमात्मा कूटस्थः आकाशवदसङ्ग एव सन् अवस्थात्रयेऽपि प्रत्यक्चैतन्यसाक्षिरूपेण वर्तत इति श्रुतियुक्त्यनुभवैर्ज्ञातव्यम् । "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतिः । आकाशदृष्टान्तो युक्तिः । अनुभवःक इति चेत् । पूर्वपूर्वदिनमवस्थात्रयमस्माभिः प्रतिदिनं स्मर्यते । स्मरणस्यानुभवपूर्वकत्वनियमात् । अस्माभिरवस्थात्रयसाक्षित्वरूपमात्मलक्षणमुपात्तम् । तेन प्रतिदिनमवस्थात्रयमस्माभिरनुभू-

यते। एवमात्मना गतानामवस्थानामागामिनां च क्रमेणानुभूयमानत्वात् अनुभवितृरूपस्यात्मनो नित्यत्वमपि सिद्धम्। एवमवस्थात्रयसाक्षित्वम्।

ननु लोके अवस्थावत एव पुरुषस्य साक्षित्वं दृश्यते। भवद्भिः कथमन्यस्यावस्थासाक्षित्वमुच्यत इति चेत्। शृणु। अयमवस्थावानन्तःकरणे प्रतिफलितचैतन्याभासः मिथ्याभूतः। स एव जीव इत्युच्यते। तस्य सुषुप्तावन्तःकरणलयेन विनष्टत्वात्। स कथं सुषुप्तिसाक्षी स्यात्। तिसृणामप्यवस्थानामेकसाक्षित्वनियमात्। बिम्बभूतस्यात्मन एव सुषुप्तेः साक्षित्वं वक्तव्यम्। स एव लाघवेन जाग्रत्स्वप्नयोरपि साक्षीति वक्तुं योग्यः। जीवस्य विकारित्वादपि साक्षित्वं न युज्यते। आत्मनस्तु निर्विकारित्वात्साक्षित्वं युज्यते। जीवः कथं विकारीति चेत्। तस्याहं सुखी, अहं दुःखीत्यादिरूपेण अन्तःकरणवृत्तितादात्म्येन विकारित्वदर्शनात् विकार्येव।

तर्हि जीवव्यतिरेकेणान्यः को वा आत्मा यः साक्षीत्युच्यते। तस्य किं लक्षणं, तस्यास्तित्वे किंप्रमाणं, तस्य ज्ञाने क उपाय इति चेत्। शृणु। निर्विकारः कूटस्थ एव साक्षी। स एवात्मा। स आकाशवत्सर्वव्यापकः सच्चिदानन्दरूपः। स एवान्तःकरणेषु जीवरू-

पेण प्रविष्टः सन् संसरति। एवंरूपपारमार्थिकात्मनि वेदान्ताः सर्वेऽपि प्रमाणम्। अवस्थावानयं जीवः चिदाभासः इदानीं जागर्ति, इदानीं स्वप्नं पश्यति, इदानीमज्ञानमोहितः सन् सुषुप्तौ वर्तते। इदानीं सुखी, इदानीं दुःखी, इदानीमुदासीन आस्ते। इत्यस्य जीवस्य अवस्थाभेदं सर्वमपि चिद्रूप इति यो जानाति स एवात्मा अवस्थात्रयसाक्षीति जानीहि। तस्यात्मनः स्वस्य निर्विकारत्वं कथं ज्ञायत इति चेत्। स्वमुखसौन्दर्यं स्वेन ज्ञातुमशक्यमपि दर्पणप्रतिबिम्बमुखेन यथा ज्ञातुं शक्यते तथा आत्मनो निर्विकारत्वमपि अन्तःकरणप्रतिबिम्बेन ज्ञातुं शक्यते। दर्पणं प्रतिबिम्बितमुखं च बिम्बभूतमुखं यथा न जानाति, तथा अन्तःकरणं अन्तःकरणप्रतिबिम्बितजीवश्च बिम्बभूतमात्मानं न जानाति। तर्हि अयमात्मा केन ज्ञायते। न केनापि ज्ञायते। ज्ञायमानस्य सर्वस्य दृश्यत्वात्। आत्मनो दृग्रूपत्वात्स्वयंप्रकाश एव। आत्मा न त्वन्येन केनापि ज्ञायते। तत्कथमिति चेत्। दृश्यघटो द्रष्टारं न जानाति। स द्रष्टा च स्वात्मानं स्वयमेव जानाति। स्वयंप्रकाशत्वात्। यथा मृत एव प्रतीयमानो दशमः पुरुषः पश्चात्स्वात्मानं स्वयमेव जानाति। ननु वस्तु अनृतमेव ज्ञाय-

ते। तथा चात्मा अनुभवस्वरूप एव नत्वन्येनानुभाव्य इति मदुक्तार्थं स्वयमेव पुरःसरन् जानीहि ।

तर्हि प्रमाणं किमिति चेत्। प्रत्यक्षमनुमानमुपमानं शब्द इति चत्वारि प्रमाणानि । पुनश्चार्थापत्तिः, संभवः ऐतिह्यं, अनुपलब्धिरिति चत्वारि प्रमाणानि सन्ति । पश्चादुक्तानां चतुर्णां पूर्वोक्तचतुर्ष्वेवान्तर्भाव इति सिद्धान्तः। वेदान्तिनश्च केचित् षट्प्रमाणान्युदाहरन्ति । तेषां लक्षणान्यतिविस्तृतानि । अस्माकं यावदावश्यकं तावन्मात्रमुच्यते । इन्द्रियेण जन्यं प्रमाणं प्रत्यक्षप्रमाणम् । धूमादिलिङ्गेन ज्ञायमानमनुमानम् । सादृश्येन ज्ञायमानमुपमानम् । आप्तवाक्यं शब्दः । आत्मन इन्द्रियागोचरत्वात् न तत्र प्रत्यक्षं प्रमाणम् । निरंशत्वात्तत्रात्मनि नानुमानं प्रवर्तते। अद्वितीयत्वान्नोपमानम्। तस्मादात्मनि शब्दप्रमाणम्। शब्दस्याप्तोक्तत्वात् । आप्तश्च यथार्थवक्ता । ईश्वरस्य यथार्थवक्तृत्वात्। तदुक्ता श्रुतिरेव शब्दः तस्माच्छ्रुतिरेवात्मनि प्रमाणम्।

पूर्वोक्तसाक्षिरूपसन्यासिनं तेन दृष्टपुरुषतदवस्थातद्व्यापारगुणदोषा यथा न स्पृशन्ति, एवमात्मानं दृश्यमानाहंकारतदवस्थातद्व्यापारगुणदोषा न स्पृशन्ति। एवं यो भाग्यशाली पुरुषः साक्षिमात्रमात्मानं

अहंकारादिभिरस्पृष्टं चैतन्यमात्रं श्रुतिभिर्जानाति स एव जीवन्मुक्तः । तथैव श्रुतिरपि वदति । हे पुत्र त्वमपि वेदान्तशास्त्रमात्मनि प्रमाणमिति विश्वस्य तदुक्तप्रकारेणावस्थात्रयसाक्षिणमात्मानं जानीहि ।

इति मनने नवमवर्णकं समाप्तम् ।

---

## अथ दशमवर्णकम् ।

इदानीं दशमवर्णके पञ्चकोशव्यतिरिक्तत्वमुच्यते। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इति पञ्च कोशाः। अन्नविकारशुक्लशोणितजन्यषड्भावविकारसहितं अन्नेनैव वर्धमानमिदं स्थूलशरीरमन्नमयकोशः । कर्मेन्द्रियैः सह प्राणमयकोशः । ज्ञानेन्द्रियैः सह मनोमयकोशः । तैरेव सह बुद्धिर्विज्ञानमयकोशः। प्रियमोदप्रमोदवृत्तिभिः सह अज्ञानमानन्दमयकोशः । इष्टवस्तुदर्शनसंतोषः प्रियम् । तद्वस्तुलाभसंतोषो मोदः । तदनुभवसंतोषः प्रमोदः । एवं पञ्चकोशाः । यथा खड्गं तत्कोशः, शिवलिङ्गं संपुटः, आम्रफलं त्वक्, पुरुषं कञ्चुकः, एतान्येते यथाच्छादयन्ति, एवं पञ्चकोशा अप्यात्मानमाच्छादयन्ति । अतः कोश इति संज्ञा ।

ननु खड्गादीनां तत्कोशादीनां च सत्ता भिन्ना। पञ्चकोशानामात्मभिन्नसत्ताकत्वाभावात् कोशादिभ्यो वैषम्यात्कथमाच्छादकत्वमिति चेत् उच्यते। आदित्यकिरणपरिणामविशेषत्वान्मेघस्यादित्यसत्तैव सत्ता। तथापि मेघः आदित्यं यथाच्छादयति। अग्निमुपजीव्यवर्तमानस्य धूमस्याप्यग्नेः सत्तैव सत्ता। तथापि स धूमोऽग्निमाच्छादयति। एवमात्मसत्तया सत्तावन्तोऽपि कोशा आत्मानमाच्छादयन्ति इति परमात्मनः पञ्चकोशव्यतिरिक्तत्वमुच्यते। खड्गादिकं तत्कोशादिकं च एकत्वेन खड्गादिरूपेण व्यवह्रियमाणमपि तत्खड्गादिकं कोशादिभिन्नम्। तद्वत् पञ्चकोशाभिन्नत्वेन व्यवह्रियमाणोऽप्यात्मा तेभ्यो व्यतिरिक्त एव।

ननु आत्मनः कोशानां च एकत्वेन व्यवह्रियमाणत्वात्परसंबन्धोऽस्तीति वक्तव्यम्। आत्मनो न केनापि संबन्धः,स निरञ्जनः इति कथमुच्यत इति चेत्। शृणु। संबन्धोऽनेकप्रकारः। तर्कसिद्धान्ते समवायः संयोग इति द्विप्रकारः। अवयवावयविनोः गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्विशेषनित्यद्रव्ययोश्च--संबंधः समवायः। आत्मनः पञ्चकोशादीनां च अवयवावयव्यादिषु अपरिगणनात् न समवायः।

तर्हि भेरीदण्डवत्संयोगोऽस्त्विति चेत् । आत्मनो द्रव्यत्वानङ्गीकारात् सोऽपिन संभवति । तर्हि आत्मनः कोशादीनां च कः संबन्धः इति चेत् । रज्जुसर्पयोः शुक्तिकारजतयोः स्थाणुपुरुषयोः आकाशवर्णयोरिव अध्याससंबन्ध एव । अयमध्यासः एकतराध्यासः अन्योन्याध्यास इति वा चेत् । अहंकारस्यात्मनश्च मिलित्वा एकप्रत्ययविषयत्वात् अन्योन्याध्यास एव।

आत्मनश्चान्नमयकोशस्य च अन्योन्याध्यासः कथमिति चेत् । उच्यते । अहं मनुष्यः, अहं देवः, अहं स्त्री, अहं पुरुषः, अहं जातः, अहं वर्ते, अहं वृद्धिं गतः अहं परिणतः, अहं जीर्णः, इतः परं मरिष्यामीति च, अहं बालः, अहं कुमारः, अहं युवा, अहं वृद्धः, अहं ब्राह्मणः, अहं क्षत्रियः, अहं वैश्यः, अहं शूद्रः, अहं ब्रह्मचारी, अहं गृहस्थः, अहं वानप्रस्थः, अहं संन्यासी,अहं रामः, अहं कृष्णः,अहं शंकरः, अहं दीक्षितः अहं शास्त्री,अहं योद्धा,अहं भोजीति च अन्नमयकोशविकारधर्मानात्मन्यध्यस्यति । आत्मनिष्ठसच्चिदानन्दान् अन्नमयकोश शरीरे मम शरीरमस्ति भाति प्रियमित्यध्यस्यति । एवमन्नमयकोशस्यात्मनश्च अन्योन्याध्यासः ।

अथ प्राणमयकोशस्यात्मनश्च अन्योन्याध्यासः कथमिति चेत् । अहं क्षुधायुक्तः, अहं पिपासावान्, अहं बलवान्, अहं वीर्यवान्, अहं क्रियावान्, अहं वक्ता, अहं गन्ता, दाता, विसर्जयिता, आनन्दयिता, मूकः, पङ्गुः, विहस्तः, पण्ढः इत्यादिप्राणमयकोशविकारानेव आत्मन्यध्यस्यति । आत्मनःसच्चिदानन्दान्मम प्राणः अस्ति भाति प्रियमिति प्राणमयकोशे चाध्यस्यति । एवं प्राणमयकोशस्य आत्मनश्चान्योन्याध्यासः ।

अथ मनोमयकोशस्यात्मनश्च अन्योन्याध्यास उच्यते । अहं संकल्पवान्, अहं विकल्पवान्, शोकवान्, मोहवान्, कामी, लोभी, स्प्रष्टा, द्रष्टा, रसयिता घ्राता, बधिरः, अन्धःइत्यादि मनोमय कोशविकारान् आत्मन्यध्यस्यति । आत्मधर्मान् सच्चिदानन्दांश्च मम मनः सम्यगस्ति भाति प्रियमिति मनोमयकोशेऽध्यस्यति । एवं मनोमयकोशस्यात्मनश्चान्योन्याध्यासः ।

अथ विज्ञानमयकोशस्यात्मनश्च अन्योन्याध्यास उच्यते । अहं कर्ता बुद्धिमान्, ऊहापोहचतुरः, एकसन्धिग्राही, योगान्तरगामी, रागद्वेषी, श्रोत्रियः, पण्डितः, विरक्तो, भक्तिमान्, उपासकः, ज्ञानीत्यादि

विज्ञानमयकोशविकारान् आत्मन्यध्यस्यति। आत्मलक्षणसच्चिदानन्दान् मम बुद्धिरस्ति भाति प्रियमिति विज्ञानमयकोशे चाध्यस्यति। एवं विज्ञानमयकोशस्यात्मनश्चान्योन्याध्यासः।

अथानन्दमयकोशस्यात्मनश्चान्योन्याध्यास उच्यते। अहं भोक्ता, सुखी, संतुष्टः, सात्त्विकः, राजसः, तामसः, मूढः, दुष्टः, शून्यः, मोदितः, अविवेकी, भ्रान्तः, इत्याद्यानन्दमयकोशविकारानात्मन्यध्यस्यति। आत्मनःसच्चिदानन्दांश्च मम ज्ञानमस्ति भाति प्रियमिति आनन्दमयकोशेऽध्यस्यति। एवमानन्दमयकोशस्यात्मनश्च अन्योन्याध्यासः संबन्धः।

अयमध्यासः केनागच्छतीति चेत्। अयमात्मा एते पञ्चकोशाः इति सम्यग्विवेकज्ञानाभावात् अविवेकेनागच्छति। तर्हि कोशानामात्मनश्च विवेकः कथमिति चेदुच्यते। लोके पुत्रमित्रकलत्रगृहधनधान्यादिवत् इदं मम शरीरं, अयं मम प्राणः, इदं मम मनः, इयं मम बुद्धिः, इदं ममाज्ञानं इति इदं ममेति बुद्धिविषयत्वात् शरीरादिरूपपञ्चकोशा आत्मा न भवन्ति। किन्तु पश्वादिवत् अनात्मैवेति, पञ्चकोशाश्चात्मनःपृथक्पृथगिति युक्तिः। शरीररहित आत्मेति प्रतिपादिकाः "अशरीरम्" इत्यादि श्रुतयश्च

सन्ति। पश्वादीनां क्षयवृद्धिविकाराः तत्स्वामिनं द्रष्टारं यथा न स्पृशन्ति, एवं शरीरादिपञ्चकोशविकाराः द्रष्टारमात्मानं मां कदापि न स्पृशन्तीत्यनुभवः ।

हे स्वामिन्, भवद्भिरुक्तपश्वादिदृष्टान्तस्य बाह्यत्वात् ज्ञातुं योग्यस्य दार्ष्टान्तिकस्यान्तरत्वात् मम बुद्धिं नारोहति। किंच पञ्चकोशाः पश्वादिवत्पृथङ्नावभासन्ते । किंतु तप्तायःपिण्डवद् आत्मन्येकतयावभासन्ते । एवं दृष्टान्तदार्ष्टान्तिकयोर्बहु वैषम्यमस्ति। कथं तेषामात्मनःसकाशात्पृथक्त्वेन ज्ञातव्यमिति चेत् । शृणु । बाह्यदृष्टिर्नेत्रम् । अन्तर्दृष्टिर्बुद्धिः । बाह्यदृष्ट्या ज्ञातुमशक्या अपि पदार्थाः अन्तर्दृष्ट्या ज्ञातुं शक्यन्ते । बाह्यवीणातन्त्र्याः तत्स्वराणां, तप्तजलादग्नेः, पुष्पाद्गन्धस्य च पृथक्त्वेन स्थूलदृष्ट्या ज्ञातुमशक्यत्वे ऽपि सूक्ष्मश्रोत्रादिज्ञानेन्द्रियैर्बुद्धिमता पुरुषेण पृथक्त्वेन इमा वीणातन्त्र्यः इमे स्वराः, इदं जलमयमग्निः, इदं पुष्पमयं गन्धः इति वीणादिभ्यः पृथक्त्वेन स्वरादीनां ज्ञानं सुकरम् । एवमेव क्षीरजलयोर्विभजनमन्येषां दुष्करमपि हंसानां सुकरम् । एतदुभयं यथा तथा आत्मनः सकाशात्पञ्चकोशानां पृथक्करणं स्थूलबुद्धीनां दुष्करमपि सूक्ष्मबुद्धीनां सुकरम् ।

हे पुत्र, सिद्धान्तवचनं शृणु । एतावत्पर्यन्तं काल-वासनायुक्तानां यः प्रपञ्चव्यवहारः तमङ्गीकृत्य पञ्च-कोशा इति तद्विवेक इत्येवमाद्युक्तम् । परमार्थे विचा-र्यमाणे आत्मनि पञ्चकोशा न सन्ति। कथमिति चेत्। यथा रज्जौ सर्पः, शुक्तिकायां रजतं, स्थाणौ पुरुषः आकाशे नीलिमा, इत्येतेषां भ्रान्त्या प्रतीतिमात्रमेव । न स्वरूपेणावस्थानम् । कालत्रयेऽप्यारोपितानां तेषां सर्पादीनां न वास्तवता । अथात्मनि पञ्चकोशा अपि आरोपिताएव न वास्तवाः । लोके यदारोपितं तदस-देव । यथा द्विचन्द्रादिकम् । तथा पञ्चकोशा अपि आत्मन्यारोपितत्वान्मिथ्याभूता एव ।

ननु आरोपितसर्पादयः अधिष्ठानज्ञाने सति तत्क्ष-णमेव न प्रतीयन्ते । पञ्चकोशास्तु आत्मज्ञाने सत्यपि प्रतियन्त एव न नश्यन्ति । तेषां कथमारोपितत्वमि-तिचेत् । शृणु । लोकेप्रातिभासिकसत्, व्यावहारिक-सत्, पारमार्थिकसदितिच त्रिविधं सत् । ईश्वरसृष्टिः जीवसृष्टिरिति द्विविधा सृष्टिः । एवं सति अध्यासरूपं शुक्तिकारजतादि सर्वं जीवसृष्टिःइदं प्रातिभासिकंसत् अस्या जीवसृष्टेः अधिष्ठानभूतमाकाशादिकं सर्वं व्या वहारिकं सत् । तत्सर्वमीश्वरसृष्टिः । तस्या ईश्वरसृष्टे-रपि अधिष्ठानभूतं यत् ब्रह्म तत्पारमार्थिकं सत् ।

तदेव नित्यम् । व्यावहारिकं सत् । व्यवहारक्षयपर्यन्तं तिष्ठति । प्रातिभासिकं व्यावहारिकं च अध्यस्तत्वेन समानेऽपि सत्तया न समाने । किंच व्यावहारिकमपि प्रातिभासिकवत् अधिष्ठानन्यायेन सद्यो नश्येद्यदि आत्मज्ञानिनो जीवन्मुक्ता अपि न स्युः । ज्ञानोपदेशगुरुशिष्यपरम्परा चापि न स्यात् । ज्ञानिनां व्यवहाराभावात्, अज्ञानिनां चोपदेष्टुमशक्यत्वात् । तस्माद्यथा मृद्यध्यस्तः पृथुबुध्नोदराकारो घटो यावत्कुलालव्यापारक्षयं तिष्ठति । एवमात्मन्यध्यस्ताः पञ्चकोशाः मिथ्येति ज्ञाता अपि यावत्प्रारब्धक्षयं दग्धपटवत् प्रतीयन्त इति जानीहि ।

किं बहुना, सिद्धान्तस्तु एवं मृद्यारोपिते घटनामरूपे बाधिते सति मृन्मात्रं यथा सत्यतयावशिष्यते, एवमात्मन्यारोपितेषु पञ्चकोशेषु आत्मज्ञानेन बाधितेषु सत्सु सच्चिदानन्दस्वरूप आत्मा एक एव सत्यतया अवशिष्यते । एवमात्मन्यारोपितेषु पञ्चकोशेषु आत्मज्ञानेन बाधितेषु सत्सु एक एव परमात्मावशिष्यते इति एवं यो जानाति स एवात्मा ज्ञानी, स एव ब्रह्मज्ञानी, तस्यैव विदेहमुक्तिःफलिष्यतीति सर्वा उपनिषदो घुष्यन्ति ॥

इति मनने दशमवर्णकं समाप्तम् ।

# अथ एकादशवर्णकम्।

अथेदानीमस्मिन्नेकादशवर्णके आत्मनःसच्चिदानन्दरूपत्वं चतुर्थं लक्षणमुच्यते। आत्मनः सद्रूपं किं, चिद्रूपं किं, आनन्दरूपंकिमिति चेत्। शृणु। कालत्रयेऽप्यबाध्यमानत्वे सति एकरूपत्वं सतो लक्षणम्। इदं लक्षणमात्मन्यस्ति। अस्य प्रमाणं किमिति चेत्। अस्य प्रपञ्चस्य सृष्टेः पूर्वं "सदेवासीत्" इति, "आत्मन आकाशः संभूतः" इत्यादिवेदान्तशास्त्रं प्रमाणम्। तेषांमनुभवः कीदृशः इति चेत्। आढ्यो दरिद्रः कर्मी भक्तो मुमुक्षुरिति सर्वे जनाः।एतेषामनुभवःकथमिति चेत्। अहं पूर्वजन्मनि सत्पात्रेषुयत्किञ्चिद्दत्तवान् तेनास्मिञ्जन्मनि ऐश्वर्यमनुभवामि। अस्मिञ्जन्मन्यपि यत्किञ्चिद्दत्तं चेत् भाविजन्मन्यपि ऐश्वर्यमनुभविष्यामीत्याढ्यस्यानुभवः। अहं पूर्वजन्मनि सत्पात्रेषु किमपि न दत्तवान्, तेनास्मिञ्जन्मनि दारिद्र्यमनुभवामि। अस्मिञ्जन्मनि मया न दत्तं चेत् भाविजन्मन्यपिदारिद्र्यमनुभविष्यामीति दरिद्रस्यानुभवः। पूर्वजन्मनि सत्कर्माण्यनुष्ठितानि, तद्वासनया अस्मिञ्जन्मनि मया सत्कर्माण्यनुष्ठीयन्ते।तेन भाविजन्मनि स्वर्गे देवत्वमायास्यति इति कर्मिणोऽनुभवः। पूर्वस्मिञ्जन्मनि अहं भगवन्तमुपासितवान्। तद्वासनया अस्मि

न्नपि जन्मनि ममभगवद्भक्तिरासीत् । अनेन भाविजन्मनि सालोक्यादिमुक्तिं वैकुण्ठादिलोकेऽनुभविष्यामीति भक्तस्यानुभवः। पूर्वजन्मसु ईश्वरार्पणरूपेण मया कर्माणि कृतानि । तेनास्मिञ्जन्मानि साधनचतुष्टयं सद्गुरुलाभश्रवणादिकं आत्मज्ञानं च लब्धम्। इतः परं मम जन्म नास्ति, अहं कृतकृत्य इतिमुमुक्षोरनुभवः। एवं सर्वेषां जनानां कालत्रयेऽप्यहमस्मीत्यनुभवस्य दर्शनात्, आत्मन्यध्यस्तस्य देहस्यैव नाशः,आत्मनस्तु न कदाचिदपिनाशः इति जानीहि । तस्मादात्मनः कालत्रयेऽप्यबाध्यमानत्वे सत्येकरूपस्य विद्यमानत्वात् आत्मनः सद्रूपत्वमस्ति ।

हे स्वामिन्, अनुभवेनात्मनः सद्रूपत्वमेवोक्तम्, न युक्त्येति चेत्। युक्त्या विचार्यमाणे आत्मनः सद्रूपत्वं स्यात् । तत्कथमिति चेत् । शृणु । वयमस्मिल्लोँके विद्यमाना वा न वा इति विचार्यमाणे विद्यमाना एवेति जानीहि । तर्हि सर्वेषामहमिहास्मीत्यनुभवात् एवं विद्यमाना वयं शरीरिणो वा अशरीरिणो वा । शरीरिण एवनाशरीरिणःशरीरस्य दर्शनात् ।

इदं शरीरं केनागतमिति विचार्यमाणे कर्मणेति निश्चयः तत्कर्मास्मदीयं वान्यदीयं वेति चेत्।अस्मदीयमेवेति वक्तव्यम् ।अन्यकर्मणा अन्यस्य स्वर्गफलान

नुभवात्। अन्यथा अन्यकर्मणान्यः स्वर्गादिफलं प्राप्नुयात्। ब्राह्मणेनयागे कृते शूद्रः स्वर्गं प्राप्नुयात्। पूर्वं शुकब्रह्मर्षिकृतसमाधिना अस्माकं सर्वेषां विदेहमुक्तिः स्यात्। तस्मादस्मदीयकर्मणैवास्माकं शरीरमिति वक्तव्यम्।

तदेतच्छरीरारंभकं कर्म अस्मिञ्जन्मनि कृतं वा पूर्वजन्मनि कृतं वेति विचार्यमाणे पूर्वजन्मनिकृतमित्येव वक्तव्यम्। एतज्जन्मकृतस्य एतच्छरीरं प्रति पूर्वभावित्वाभावेन अकारणत्वात्। पूर्वजन्मनिकरणकाले वयं विद्यमाना वानवेति विचार्यमाणे विद्यमाना एव। अविद्यमानैः कर्म कर्तुमशक्यत्वात्। तदानीमस्माकं शरीरमस्तीति वा न वेति चेत्।अस्त्येव। शरीराभावे कर्मकर्तुमशक्यत्वात्। तच्छरीरमपि तत्पूर्वजन्मकृतकर्मणा वा न वा। तत्पूर्वजन्मकृतकर्मणैवेति वक्तव्यम्। एवं पुनःपुनर्विचार्यमाणे कर्मणश्च शरीरस्य च प्रवाहरूपेणानादित्वं सिद्धम्। तदुभयत आत्मन आकाशस्येव साक्षादेव मुख्यमेव स्वरूपेणैवानादित्वं सिद्धम्। एवं भूतकाले वर्तमानकाले सत्त्वं सिद्धमिति युक्त्या साधितम्।

इतःपरं भविष्यत्कालेऽपि आत्मनः सत्त्वं युक्त्या साध्यते। अस्माभिर्जन्मान्तरेषु श्रवणमननादि

कृत्वा कर्मण एव मुख्यबुद्ध्यानुष्ठितत्वादेतज्जन्म शरीरं चागतम्। अस्मिञ्जन्मनि क्रियमाणं कर्मापि इतः परं जन्म ददाति। तस्मिन्नपि क्रियमाणं कर्मापि ततः परं कर्म ददाति। एवं पुनः पुनर्विचार्यमाणे कर्मप्रवाहस्य शरीरप्रवाहस्य च भविष्यत्कालेऽन्तो नास्ति। तत्त्वज्ञानेन कर्मणि क्षीणे सति शरीरमपि नायाति। तदुभयसंबन्ध्यात्मा तु यावद्ब्रह्मज्ञानं शरीरस्य सृष्टिप्रलयावनुभवन्, शरीरस्य सृष्टिस्थितिसुखदुःखेच्छा अनुभवन् सन्, अधः स्थावरपर्यन्तं, ऊर्ध्वं ब्रह्मलोकपर्यन्तं परिभ्रमंस्तिष्ठत्येव न नश्यति। तत्त्वज्ञाने सति अविद्याकामकर्मादीनामपि नाशात्, दुःखहेतोरभावात् स्वस्वरूपानन्दमनुभवन्, विदेहमुक्तो सुखमेव तिष्ठति। एवं भविष्यत्कालेऽप्यात्मनः न कदाप्यसत्त्वम्। किंतु सर्वदा सत्त्वमेव युक्त्या सिद्ध्यति।

एवं कालत्रयेऽप्यात्मनो विद्यमानत्वात् अबाधितत्वेन परमार्थत एव एकरूपत्वात्सत्त्वं सिद्धम्। एवं श्रुतियुक्त्यनुभवैरनेकप्रलयेष्वनेकप्रपञ्चेषु विनष्टेष्वपि स्वयमनष्टः सन्नेव वर्तते। अतः सृष्टिस्थितिसंहाराः प्रपञ्चस्यैव न त्वात्मनः। एवं कालत्रयेऽप्यबाधितत्वादेकरूपत्वाच्च आत्मा सद्रूप इति जानीहि।

आत्मनश्चिद्रूपत्वे प्रमाणं किमिति चेत्। शृणु।

सूर्यादिसाधनान्तरानपेक्षं स्वयं प्रकाशमानं सत्, स्वस्मिन्नारोपितसकलजडपदार्थावभासकं चिद्रूपम्। एतच्चिद्रूपलक्षणमात्मन्यस्ति । कथमिति चेत् । आत्मा गाढान्धकारेऽपि इतरानपेक्षमेव स्वयं प्रकाशते । स्वस्मिन्नारोपितशरीरबाल्ययौवनवार्धकावस्था अवस्थाव्यापारांश्च इतरानपेक्षं सम्यग्जानाति । अत आत्मानश्चिद्रूपत्वं सिद्धम् ।

ननु अस्माकं सर्वज्ञत्वाभावात् सर्वपदार्थावभासकत्वं कथमिति चेत् । प्रपञ्चः आन्तरो बाह्य इति द्विविधः । एतत्प्रपञ्चद्वयमपि अस्माभिः प्रकाश्यते । न वयं तेन कदापि प्रकाश्याः । तत्कथमिति चेत् । उच्यते । बाह्यप्रपञ्चो नाम पृथिव्यप्तेजोवाय्वाकाशा इति, शब्दस्पर्शरूपरसगन्धा इति, पञ्चीकृतभूतानि ब्रह्माण्ड इति, चतुर्दशभुवनानीति, चतुर्विधस्थूलशरीराणीति च विविधनामगुणकर्मविकारशक्त्याश्रयः । एतद्बाह्यप्रपञ्चं महत्तरभेदेन बहुधा विभज्य प्रमाणैर्वयमेव जानीमः । न त्वस्मानयं जानातीति अन्तर्मुखतया विचार्यमाणेऽस्माकं बाह्यप्रपंचावभासकत्वं सिद्धम् ।

अथान्तरप्रपञ्चावभासकत्वमस्माकं कथमिति चेत्। शृणु । आन्तरप्रपञ्चः अन्नमयादिजीवन्मुक्तिपर्यन्तैः

प्रकारैर्बहुधा भिन्नः । स आन्तरप्रपञ्चः, अयमन्नमयः अयं प्राणमयः, अयं मनोमयः, अयं विज्ञानमयः, अयमानन्दमयः इत्येवमेव पञ्चकोशा इति, इदं स्थूलशरीरं, इदं सूक्ष्मशरीरं, इदं कारणशरीरं एतच्छरीरत्रयमिति च, इमे षड्भावविकाराः, इमे षट्कोशाः, इमे षडूर्मयः, इदमान्ध्यं, इदं पटुत्वं, अयं रागः, अयं द्वेषः, इदं त्रिविधकरणमिदमन्तःकरणम्, इयं जाग्रत्, अयं स्वप्नः इयं सुषुप्तिः, एवमवस्थात्रयमिति च, इदं ज्ञानेन्द्रियपञ्चकं, इदं कर्मेन्द्रियपञ्चकं, इमे पञ्चप्राणाः, इयं मनः, इदं बुद्धिः, इदं चित्तं,अयमहंकारः, अयं संकल्पः,अयं निश्चयः,इदमवधारणं,अयमभिमानः अयं विश्वः, अयं तैजसः, अयं प्राज्ञः, इत्येवमवस्थावन्तः, अयं प्रातिभासिकः, अयं व्यावहारिकः, अयं पारमार्थिकः, इदं सात्त्विकं, इदं राजसं, इदं तामसं इदं सुखं, इदं दुःखं, इदं ज्ञानं, इदमज्ञानं, इदं प्रियं, इदमप्रियं, इयमुपेक्षा, इदं साधनचतुष्टयं, इदं मैत्र्यादिचतुष्टयं, अयमष्टाङ्गयोगः, इदं श्रवणं, इदं मननं, इदं निदिध्यासनं, इयं समाधिरिति च, इदं प्रमाणं, इदं प्रमेयं, अयं प्रमाता, इदं तापत्रयं, अयमाधिः, अयं व्याधिः. इदमारोग्यं, इयं भक्तिः, इदं मन्दं, इदं तीव्रं. इदं सगुणोपासनं, इदं निर्गुणोपासनं, अयं मनो-

नाशः, अयं वासनाक्षयः, इयं विदेहमुक्तिः, इयं जीवन्मुक्तिरित्येवमादिविविधनामरूपगुणविकारशक्त्याश्रयभूतान्तरप्रपञ्चः सर्वोऽपि एवमेव पृथग्विभज्य अस्माभिर्ज्ञायते। स अन्तरप्रपञ्चस्तु अस्मान्न जानातीति सम्यग्विचार्यमाणे यत आन्तरप्रपञ्चोऽस्माभिर्ज्ञायते, अत आत्मनश्चिल्लक्षणसद्भावात् आत्माचिद्रूपः।

हे स्वामिन्, आत्मा चिद्रूपः केनापि न ज्ञायत इति भवद्भिरुक्तं खलु। मनसा सकलं ज्ञायते। आत्मा तेनैव ज्ञायतामिति चेत्। शृणु। मन उत्पत्तिविनाशवत् संकल्परूपं परिच्छिन्नं घटवद्भूतकार्यं कामादिविकारकलुषीकृतं स्मृतिविस्मृतिमत्, एवंभूतं पुनर्जडमिति ज्ञातव्यम्। तस्य मनसः प्रकाश एव नास्ति। तदपि मनश्चितैव ज्ञायते। तादृशं जडं मनः स्वप्रकाशकचिदात्मानं कथं जानीयात्, न जानीयादित्येवेहि।

तर्हि "मनसैवानुद्रष्टव्यः" इति शास्त्रस्य किं तात्पर्यमिति चेत्। शृणु। अग्निना तप्तस्य स्वर्णस्य प्रकाशो जायत इति व्यवहारे, अग्निना स्वर्णेऽविद्यमानः प्रकाशः स्वयं न प्रकाश्यते। किं तु अग्नितापेन मले निरस्ते सति पूर्वसिद्धस्वर्णप्रकाशः स्वयं प्रकाशते, न तु नूतनप्रकाशः संपाद्यते। नूतनतया संपाद्यत

इति चेत्। पाके क्षिप्ते घटेऽपि अग्निःप्रकाशं संपादयेत्। तथा न दृश्यते। अयमर्थो यथा तथा मनश्च आत्माकारेण परिणममानं आत्मप्रतिबिम्बसहितं सत् आत्मावरकं मिथ्याभूतमनाद्यज्ञानं बाधते। निरस्तेऽज्ञाने स्वात्मा स्वयमेव भासत इति "मनसैवानुद्रष्टव्यः" इतिशास्त्रस्य तात्पर्यम्।

मनश्चात्मनैव ज्ञायते। न त्वात्मा मनसा ज्ञायते। एतद्वा कथमिति चेच्छृणु। दीपेनान्धकारविनाशस्थले स्थाली च तैलं च वर्तिश्च एतान्त्रितयमप्यन्धकारं विनाशयितुं न शक्नोति। तथापि तद्वर्तिसंबन्ध्यग्निर्दीपनामधेयः सन्नग्निं बाधते। एवमेव प्रकृते स्थालीरूपशरीरे कर्मरूपतैलेन उत्थापितवर्तिरूपमनसि अग्निरूपात्मारुह्यतदभेदेनावस्थितः। जीवानामपि तत्तद्विषयावरकाज्ञानरूपान्धकारं निरस्य दीपो घटपटादिपदार्थानिव बाह्यान्तरपदार्थान्प्रकाशयति। तस्मात् हे पुत्र, दीपप्रकाशो यथा स्वभासा यथा स्वयमेव प्रकाशः सन् स्वसंबन्धिपदार्थानपि प्रकाशयति। एवमेवान्तः करणमारुह्य स्वचैतन्येनैव प्रकाशमान आत्मापि स्वसंबन्धिपदार्थान् बाह्याभ्यन्तरांश्च प्रकाशयति। अत आत्मनश्चिद्रूपत्वं सिद्धम्।

अथानन्दरूपत्वमुच्यते । नित्यं निरुपाधिकं निरतिशयं यत्सुखं स आनन्दः । स एवात्मनः स्वरूपम् । अत एव स्रक्चन्दनवनितादिविषयेभ्यो जातमनित्यं सोपाधिकमतिशययुक्तं यत्सुखं तदात्मस्वरूपानन्दो न भवति । तस्मात्पूर्वोक्तानन्द एवात्मनः स्वरूपम् । तत्कथमिति चेत् । सुषुप्त्यानन्दे तत्सुखलक्षणस्य विद्यमानत्वात्तमानन्दमहमेवेति जानीहि ।

ननु सुषुप्तौ दुःखनिवृत्तिरेव दृश्यते । भवदुक्तानन्दो नानुभूयते । तस्मात्कथं तत्र सुषुप्तावानन्दलक्षणविचार इति चेत् । शृणु । लोके सुषुप्त्योत्थितः पुरुषः अहमेतावन्तं कालं सुखमस्वाप्समिति सुषुप्तावात्मनः सुखसद्भावमेव वदति । अतः सुषुप्तौ सर्वेषामपि स्वानुभवेनानन्दोऽस्ति ।

तर्हि भवदुक्तं नित्यत्वं निरुपाधिकत्वं निरतिशयत्वमिति लक्षणत्रयं सुषुप्त्यानन्देऽस्ति चेद्वक्तव्यमिति चेत् । शृणु । प्रथमतो निरुपाधिकत्वमुच्यते । स्रक्चन्दनादिविषया उपाधयः । तैर्जायमानं सुखमौपाधिकम् । तेषूपाधिषु सुषुप्तौ न कोऽपि दृश्यते । सुखं तु सर्वैरप्यनुभूयते । अतः सुषुप्तौ निरुपाधिक आनन्दोऽस्तीत्यवगम्यताम् । तस्य निरातिशयत्वं कथमिति चेत् । शृणु । मनुष्यानन्दमारभ्य हिरण्यगर्भा-

नन्दपर्यन्ता एकादशानन्दाः । ते शतगुणोत्तराः । अतस्तेषामानन्दानां सातिशयत्वम् । ब्रह्मानन्दस्य सर्वोत्तरस्य निरवधिकत्वात् स्वाधिकानन्दाभावात् निरतिशयत्वम् । स ब्रह्मानन्द एव सुषुप्त्यानन्दः । अतस्तस्य निरतिशयत्वं सिद्धम् । सर्वेऽपि पुरुषाः सुषुप्तिसुखमेव सुखं, विषयजन्यं सुखं न सुखमिति स्त्रीपुत्रादिसुखं विहाय मृदुशय्यादिसाधनानि प्रयत्नेन संपाद्य सुषुप्तिसुखमेवानुभवन्ति। अनुभवसमये मोहिनीं सौन्दर्यवतीं स्त्रियमपि प्रबोधयन्तीं प्रहरन्ति । तदानीं न किमपीच्छन्ति । पुनरुत्थापिता अपि तमेवानन्दं स्मृत्वानुभवितुं पुनः शयनं कुर्वन्ति । अतस्तस्यसुषुप्त्यानन्दस्य निरतिशयत्वमस्तीत्यवेहि ।

नित्यत्वं कथमिति चेत् । जाग्रत्स्वप्नयोःसुखस्यानेकरूपेणानेकैर्विषयैः पृथगननुभूयमानत्वात् तस्य परिच्छिन्नत्वेनानित्यत्वमस्ति । सुषुप्तिसुखं तु एकरूपं पूर्णं, जन्यं च न भवति । अतो नित्यं चेत्, जाग्रत्स्वप्नयोरनुभवितव्यम्, तथा नानुभूयत इति चेत् । जाग्रत्स्वप्नयोरपि तत्सुखमस्त्येव । किं तु वृत्तिविशेषैरावृतं सत् नानुभूयते ।

कारणभूतमानन्दं कार्यरूपान्तःकरणवृत्तयः कथमावृण्वन्तीति चेत् । आदित्यं मेघवत्, अग्निं धूमवत्,

रज्जुं सर्पवत्, ब्रह्मानन्दमप्यन्तःकरणवृत्तयःकार्यभूता अप्यावृण्वन्ति । यथा अग्न्यादित्यौ भस्महिमाभ्यां बालमूढदृष्ट्यावृतत्वेन प्रतीयमाना अपि विवेकदृष्ट्यानावृतौ। तथा ब्रह्मानन्दरूपसुषुप्त्यानन्दश्च जाग्रत्स्वप्नयोरावृत इव बहिर्मुखानामेव भाति न विवेकिनामन्तर्मुखानाम् । तेषां तु ब्रह्मानन्दः स्वरूपभूतत्वात्कालत्रयेऽपि एकरूपः सन्प्रतीयते। अतो ब्रह्मानन्दाभिन्नसुषुप्त्यानन्दस्यापि नित्यत्वं सिद्धम्।

एवं निरुपाधिकनिरतिशयनित्यब्रह्मानन्दत्रिविधलक्षणानामस्मास्वप्यनुभूयमानत्वादस्माकमानन्दरूपत्वमस्ति।एवंसच्चिदानन्दलक्षणस्य अस्मासु श्रुतियुक्त्यनुभवसिद्धत्वात् अस्माकमात्मनः सच्चिदानंदब्रह्मत्वं सिद्धमित्यवेहि । वयं सच्चिदानन्दरूपा इत्यनुभवः कथमायातीतिचेत् । षड्विधलिङ्गैर्वेदान्तशास्त्रतात्पर्यावधारणरूपश्रवणं गुरुमुखात्कृत्वा, श्रवणानुसारेण मननं मननानुसारेण निदिध्यासनं कृत्वा पश्चाद्बहुकालं स्थितवतः सच्चिदानन्दब्रह्मैवाहमिति ज्ञानं जायते । इदं परोक्षज्ञानम् ।

इदमेव परोक्षज्ञानमप्यकृत्वा अहं कर्ता, ममेदं कर्म, अहमेतज्ज्ञातिः, एतद्वर्णः,एतदाश्रमः इत्यभिमानं सर्वं विहाय ब्रह्मैवाहमस्मीत्यनुभवं च तत्र प्रयत्नं च तत्र

कर्तृत्वं च विहाय तूष्णीं सुषुप्ताविव जले लवणवत् ब्रह्मणि विलीनान्तःकरणस्य निर्विशेषं स्थितवतोऽस्य महात्मनो निर्विशेषं यज्ज्ञानं स्वयमेव स्फुरति, स एवापरोक्षानुभवः।

अयमेतादृशानुभवो यदा जायते तदा अयं पुरुषः स्वानुभवरूपः, तदानन्दरूपः। तस्यानन्दवैभवं स एव जानाति नान्यः। तथा आनन्दप्रतिपादकवेदान्तोऽपि न जानाति। नवक्तुमपि शक्नोति। तदानन्दमनुभवन् स पुरुषोऽपि तमानन्दं केवलमनुभवति। सुषुप्त्यानन्दमिव नान्यस्मै वक्तुं शक्नोति। मनसापि स्मर्तुं न शक्नोति। हे पुत्र, तस्मात्तव स्वानुभूतिं त्वमेवानुभवितुं शक्तः। य ईश्वरःकृपया गुरुरूपेणागत्य त्वां बोधितवान् स गुरुरूप ईश्वरोऽपि इदमित्थमिति वक्तुं न शक्नोति। हे पुत्र, त्वमेवं स्वानुभवं जानन्नपि अजानन्निव आनन्दरूपेण तिष्ठ।

इति मननं एकादशवर्णकं समाप्तम्।

---

## अथ द्वादशवर्णकम्।

अस्मिन्द्वादशवर्णके आत्मनोऽखण्डार्थरहस्यमपि कृपया गुरुरुपदिशति।

शिष्यः हे स्वामिन्, भवद्भिरेकादशवर्णकेषूपदिष्टैरर्थैं-

देहादिपञ्चकोशेषु ममाहमित्यात्मबुद्धिर्गलिता । बुद्धिप्रकाशकं सच्चिदानन्दस्वरूपं यद्ब्रह्म तदेवाहमित्यात्मज्ञानमागतम्। सर्वे संशया नष्टाः। तथापि पुनरेकः संशयो वर्तते। स क इति चेत्। शृणु। अयमात्मा सद्रूप इति, चिद्रूप इति, आनन्दरूप इति चोक्तं किल। एवं त्रिविधरूपप्रतिपादकानि त्रीण्यपि पदानि त्रिविधभेदभिन्नार्थं प्रतिपादयन्ति। तथा भिन्नार्थकानीव मम प्रतिपादयन्ति। तस्मादेतस्य सच्चिदानन्दपदत्रयस्य भिन्नार्थवत्प्रतीयमानस्य अखण्डार्थत्वं कथं सिद्ध्येत्। इति शिष्यवचः श्रुत्वा गुरुरुपदिशति। हे पुत्र अखण्डार्थः क इति चेत्। देशपरिच्छेदः, कालपरिच्छेदः वस्तुपरिच्छेदः इतित्रिविधपरिच्छेदरहिततया अपरिच्छिन्नोऽर्थोऽखण्ड इति जानीहि। तर्हि अखण्डार्थस्य एतानि त्रिणिलक्षणानि किमर्थानीति चेत्। शृणु। आकाशस्यापि व्यापकत्वेन देशपरिच्छेदरहितत्वात्तत्रातिव्याप्तिवारणाय कालपरिच्छेदः उपात्तः। आकाशस्योत्पत्तिविनाशवत्त्वेनकालपरिच्छेदोऽस्तीति न तत्राव्याप्तिः। देशकालपरिच्छेदमात्रोपादाने कालेऽतिव्याप्तिः कालस्य देशपरिच्छेदो नास्ति। कालपरिच्छेदोऽपि नास्ति। स्वस्य स्वीयैश्च परिच्छेत्तुमशक्यत्वात्।

अत उक्तं वस्तुपरिच्छेदरहित इति। कालस्य स्वभिन्नवस्तुसद्भावात् वस्तुपरिच्छेदोऽस्ति आत्मान एतत्रिविधपरिच्छेदराहित्यमस्ति। अतस्त्रीणि लक्षणान्युक्तानि। तैर्ज्ञेयः।

ननु भवद्भिरुक्तमखण्डार्थलक्षणमात्मनि प्रदर्शयितव्यम्। आत्मन एवाखण्डार्थत्वात् तत्रात्मनि न दृश्यते। कथमिति चेत्। उच्यते। सर्वेषामस्मिन्देशे तिष्ठामि,अस्मिन्देशे न तिष्ठामीत्यनुभवेनदेशपरिच्छेदराहित्यं नास्ति। अहमस्मिन्वर्षे जातः,इतः परं दशमे वर्षे मरिष्यामीत्यनुभवेन आत्मनः कालपरिच्छेदराहित्यंनास्ति। नाहं ब्राम्हणः, नाहं क्षत्रियः इत्यनुभवादात्मनो वस्तुपरिच्छेदराहित्यमपिनास्ति।

भवद्भिस्त्रिविधपरिच्छेदशून्य आत्मेति कथमुक्तमिति चेत्। शृणु। मया तव पूर्वमेकादशवर्णके आत्मानात्मलक्षणकथनावसर आत्मापरिपूर्णः, अनात्मा परिछिन्नः दृश्यं सर्वमध्यस्तमित्युपदिष्टं खलु। तथापीदानीमात्मलक्षणं प्रति शपथं करोषि। तस्मात्त्वं शिष्यो वा प्रतिवादी वा इति संदेहः। शिष्यश्चेत्कृपया पुनरप्यनुग्रहं कुर्मः। प्रतिवादी चेत्। क्षमया तूर्ष्णीभविष्यामः।अथ वा कोपेन शापिष्यामः। भवतः कोपो वादिनि फलिष्यति वा इति चेत्। शि-

ब्ये उपदेशार्थं क्रियमाणोऽनुग्रहः फलिष्यति चेत्, यदि निग्रहोऽपि फलिष्यति। लोके निग्रहानुग्रहसामर्थ्यरहितस्य ब्रह्मज्ञानिनश्च तत्त्वतो भेदो नास्तीति जानीहि।

तर्हि हे स्वामिन् । सद्गुरोः कृपापात्रभूतशिष्य एवाहम्। मम एकः संदेहो जातः। तस्मादेवं पृष्टवान् न तु तर्केणेति वदसि चेत् । शृणु । इदं । देशकालवस्तुपरिच्छेदत्रयं स्वभावतो देहस्यैव । न तु पूर्णप्रत्यगात्मनः परिच्छेदत्रयमपि प्रत्यगात्मस्वरूपपरिपूर्णब्रह्मणः देशपरिच्छेदो नास्तीति चेत्, तत्कथं ज्ञातव्यमिति चेत् । शृणु । घटः सन्, पटः सन्, कुड्यः सन्, कुसूलं सदिति च, पृथिवी सती, आपः सत्यः, तेजः सत्, वायुः सन्, आकाशं सत् इति च एवंभूतभौतिकप्रपञ्चे सद्रूपेणानुभूयमानत्वात् आत्मनो विभुत्वम् । एवं सर्वव्यापकस्यात्मनो देशपरिच्छेदो नास्ति । आत्मनः पूर्वोक्तप्रकारयुक्तया अनादित्वेन नित्यत्वात् भविष्यत्कालपरिच्छेदो नास्ति । एवं भूतकालभविष्यत्कालसंबन्धस्यात्मनः एकत्वादात्मनः वर्तमानकालपरिच्छेदो नास्ति । वस्तुपरिच्छेदराहित्यमात्मनः कथमिति चेत् । शृणु । आत्मनः सर्वात्मकत्वाद्वस्तुपरिच्छेदो नास्ति ।

वस्तूनि कानीति चेत् । सजातीयभेदभिन्न-विजातीयभेदभिन्नस्वगतभेदभिन्नानीति वस्तूनि । तानि वा कथमिति चेत् । वृक्षस्य वृक्षान्तरात्सजातीयभेदः। वृक्षस्य शिलादेर्विजातीयभेदः। वृक्षस्य पत्रपुष्पफलादेः स्वगतभेदः । अस्य त्रिविधस्यापि भेदस्य आत्मन अभावात् आत्मा भेदशून्यः। अत एव आत्मनो वस्तुपरिच्छेदो नास्तीति जानीहि ।

ननु आत्मनः सजातीयविजातीयस्वगतभेदा न सन्तीति वक्तुं न शक्यते। कथमिति चेत् । एकमेव चैतन्यं ब्रह्मचैतन्यं ईश्वरचैतन्यं, कूटस्थचैतन्यं, जीवचैतन्यमिति वर्तते । अतः सजातीयभेदोऽस्ति । आत्मस्वरूपं ब्रह्मेति, अनात्मस्वरूपं प्रपञ्चमिति उभयोर्वर्तमानत्वाद्विजातीयभेदोऽस्ति। ब्रह्मणः सच्चिदानन्द इति वर्तमानत्वात्स्वगतभेदोऽस्ति । एवं भेदत्रये स्थिते आत्मनो भेदत्रयं नास्तीति कथमिति चेत्। शृणु। आकाश एक एव उपाधिभेदेन महाकाश इति, मठाकाश इति घटाकाश इति घटजलप्रतिबिम्बिताकाश इति च भेदेन यथा प्रतीयते, तथा मायोपाधिना एकमेव चैतन्यं ब्रह्मेति ईश्वर इति च, अविद्योपाधिना कूटस्थ इति, जीव इति च केवलं प्रतीयते। विचार्यमाणे सजातीयभेदो नास्ति।

विजातीयभेदो नास्ति । कथमिति चेत् । शृणु । रज्जुं विना सर्पो यथा नास्ति, आकाशं विना यथा मालिन्यं नास्ति, तथा आत्मानं विना अनात्मापि नास्ति । अधिष्ठानं विना आरोपितं सर्वं मिथ्यैव । मिथ्या नाम वन्ध्यापुत्रशशविषाणादिवत् कालत्रयेऽप्यविद्यमानम् । अनात्मनः परमार्थतः अविद्यमानत्वात् आत्मनो विजातीयभेदो नास्ति ।

स्वगतभेदः कथं नास्तीति चेत् । शृणु । आत्मा, साक्षी, कूटस्थः, पारमार्थिकः, प्राज्ञः, ब्रह्म, सत्, चित्, आनन्दः, नित्यः, एकः, पूर्णः इत्यादिविधिवाक्यनामानि च एकस्मिन्निर्विशेषात्मस्वरूपप्रकाशने तात्पर्यं वन्ति, न तु स्वरूपभेदे । आत्मनो निर्विशेषत्वान्निरंशत्वाच्च । तस्मात्स्वगतभेदो नास्तीत्येवं जानीहि ।

ननु सच्चिदानन्दपदानां भिन्नार्थत्वात् हस्तकरपाणिवत्पर्यायत्वाभावात् तर्हि प्रतिपाद्यमानस्यात्मनः स्वगतभेदेन भवितव्यमिति चेत् । लोहितोष्णप्रकाशो दीप इत्यत्र यथा दीपस्य स्वगतभेदो नास्ति, एवं सच्चिदानन्द आत्मेत्यत्रापि स्वगतभेदो नास्ति ।

तर्हि पत्रपुष्पफलरूपो वृक्ष इत्यत्रापि स्वगतभेदो न स्यादिति चेत् । न । तत्र वृक्षस्य सर्वव्यापिपत्रादिरूपत्वं नोच्यते । एकस्मिन्प्रदेशे पत्ररूपः एकस्मि-

न्प्रदेशे फलरूपः इत्युच्यते। अतस्तत्र स्वगतभेदोऽस्ति।सच्चिदानन्द रूप आत्मेत्यत्रसर्वांशेनाप्यात्मनः सच्चिदानन्दरूपत्वस्य प्रतिपाद्यमानत्वात्, लोहितोष्णप्रकाशो दीप इति सर्वांशेनापि लोहितोष्णप्रकाशत्वेन प्रतिपाद्यमानस्य दीपस्येव स्वगतभेदो नास्ति।

एवं चेत् श्रुतिः "आत्मा सद्रूपः चिद्रूपः आनन्दरूप" इति पुनः पुनः किमर्थमुपदिशति। एकेनैवोपदेशेन आत्मानं ज्ञातुं शक्यत्वादिति चेत्। शृणु। श्रुतेस्तात्पर्यं ब्रवीमि। कथमिति चेत्। आत्मनिष्ठं सत्त्वं जगति, चित्त्वं जडेषु बुद्ध्यादिषु च आनन्दत्वं पुत्रभार्यादिषु च, जगन्निष्ठजडत्वं पुत्रभार्यादिनिष्ठदुःखित्वं च सच्चिदानन्दे आत्मनि च परस्परं वैपरीत्येन अविद्यया आरोपितम्। अतः सर्वं जगत्सत्यं बुद्ध्यादयःचेतनाः, पुत्रभार्यादयः आनन्दरूपाः, अहं नश्वरः, अहं जडः, अहं दुःखीतिच परिभ्रमन्ति। एतद्भ्रान्तिनिवृत्तये मातृभूता श्रुतिः जीवान् प्रत्युपदिशति।कथमिति चेत्। हे जीवाः, यूयं सच्चिदानन्दस्वरूपाः एवेति बोधनार्थं आत्मा सद्रूपो नानृतरूपः,चिद्रूपो न जडरूपः,आनन्दरूपो न दुःखरूप इति तत्तद्भ्रान्तिनिवृत्यर्थं बोधयतीति जानीहि। श्रुतिः आत्मनः सच्चिदानन्दरूपेण भेदं न बोधयति।

लोके केचन वादिनः आत्मनः सत्त्वं धर्मः, चित्त्वं सुखं च गुणः, अत आत्मा सच्चिदानन्दस्वरूपो न भवतीतिकथयन्ति । तन्निवारणार्थमपि श्रुतिः आत्मा सच्चिदानन्दस्वरूप इति वदतीत्यवगन्तव्यं भवद्भिः । श्रुतेस्तात्पर्यमेवमिति कथंज्ञातव्यमिति चेत् । सर्वासामपि श्रुतीनां उपक्रमोपसंहारादिषड्विधलिङ्गैरखण्डार्थे तात्पर्यस्यावधारणादिति मन्तव्यम् ।

हे स्वामिन्, एवं श्रुत्यैवाखण्डार्थः साधितः । युक्त्यापि कृपया साधनीयः । न तु स्वयमेव प्रकाशते अन्येन वा । आद्ये सदेव चित्स्यात् । अन्येन चेत् । सतः प्रकाशकं तदन्यवस्तु सद्विलक्षणं वा सदन्तरं वा। सद्विलक्षणत्वे सति शशविषाणादिवदसत्त्वेन तस्य सत्प्रकाशकत्वं न संभवति । सदन्तरमिति पक्षे तत्सदन्तरं स्वयं प्रकाशते वान्येन प्रकाशते वा इति विकल्पे, आद्यपक्षे सत एव स्वयंप्रकाशकत्वे चित्त्वं स्यात् । अन्येन प्रकाशत इतिपक्षे पुनरपि विकल्पः पूर्ववदायाति । एवं विकल्पे क्रियमाणे आत्माश्रयदोषः अन्योन्याश्रयदोषः चक्रकाश्रयदोषः अनवस्थादोषः इति बहवो दोषा आपतेरन् । तस्मात्सत् स्वत एव प्रकाशते । सतः स्वयंप्रकाशत्वे सदेव चित् । चिदेव सत् । उभयमप्येकमेव। सदन्तरमस्तीतिवेदेषु कुत्रापि

न दृश्यते । अतः सत् स्वयमेव प्रकाशते इति निश्चयः । अतः सदेव चिदिति सिद्धम् । तस्य स्वयंप्रकाशमानस्य सतः आनन्दत्वं कथमिति चेदुच्यते । सत अद्वैतत्वादानन्दत्वम् । आनन्दः पूर्ण एव तिष्ठति । नाल्पे पूर्णत्वम् । अतोऽद्वैतस्यैव न द्वैतस्य । कथं सत् अद्वैतमिति चेत् । हे पुत्र, सतः सद्वितीयत्वं सदन्तरेण वा सद्विलक्षणेन वा वद । नाद्यः । सदन्तरस्य शास्त्रेण युक्त्यनुभवेन च असिद्धत्वात् । न द्वितीयः । सद्विलक्षणस्य शशविषाणवत्स्वरूपाभावेन तेन सद्वितीयस्य वक्तुमशक्यत्वात् । तस्माद्विकल्पद्वयादन्योन्यविकल्पो नास्ति । अत एकस्य सतो द्वितीयाभावादद्वैतत्वं सिद्धम् । तेन पूर्णत्वं सिद्धम् । तेन स्वप्रकाशः सदेव आनन्दः ।

एवं युक्त्यापि सच्चिदानन्दपदानामखण्डार्थत्वं साध्यते । अखण्डार्थत्वमेकादशवर्णकेऽप्युक्तम् । तथापि पुनरुच्यते दार्ढ्यार्थम् । शृणु । सर्वेषां सुषुप्तावेव सुखं भाति। तत्सुखं जाग्रत्स्वप्नयोरिव न नाना। किंतु एकरूपं निर्बाधम् । तस्मात्तत्सुखमद्वैतमेव । तस्यामवस्थायां सूर्याद्यालोकानपेक्षं सुषुप्त्यानन्दस्य प्रकाशमानत्वाच्च तस्य चित्त्वम्। तस्य सुषुप्त्यानन्दस्य स्वयंप्रकाशकत्वे किं प्रमाणमिति चेत् । सुषुप्तौ स्थि-

तस्य एतावन्तं कालं सुखमस्वाप्समिति स्मरणमायाति,स्मरणस्यानुभवपूर्वकत्वनियमात्।सुषुप्तिसुखस्यानुभवो वक्तव्यः। तदानीमनुभवकारणस्य इन्द्रियादेरभावात् स्वानुभवः सुषुप्त्यानन्दस्य स्वयंप्रकाशकत्वादेवेति जानीहि।

ननु सुषुप्तावनुभवेन सुखं च प्रकाशते। अज्ञानं च प्रकाशते। तयोर्मध्ये सुखं वा अज्ञानं वा स्वप्रकाशवस्त्विति विचार्यमाणे सुखमेव स्वयंप्रकाशमिति वक्तव्यम्।नाज्ञानं,तस्यावरणरूपत्वेन प्रकाशाभावात्। अतः सुषुप्तावात्मरूपं सुखमेव स्वप्रकाशं सत् स्वस्मिन्नारोपितमज्ञानमपि प्रकाशयति। अतस्तत्सुखं स्वप्रकाशमेव अनुभवेनापि सच्चिदानन्दपदानामखण्डार्थत्वं सिद्धम्।

एवं श्रुतियुक्त्यनुभवैः आत्मनः स्वगतभेदो नास्ति।एवंसजातीयविजातीयस्वगतभेदानामभावाद्वस्तुपरिच्छेदो नास्ति। एवं देशकालवस्तुपरिच्छेदाभावेन आत्मा परिपूर्ण इति सिद्धम्। अनेनाखण्डैकरसत्वं सिद्धम्।

हे पुत्र, एवं परिपूर्णानन्दात्मनो दुःखमागन्तुकम्। तद्दुःखं शरीरेण, शरीरं कर्मणा, कर्म रागादिना, रागादिरभिमानेन, अभिमानोऽविवेकेन, अविवेकोऽज्ञा-

नेन च आगत इति ज्ञात्वा तद् ज्ञानं ज्ञानेन बाधितव्य-मिति, ज्ञानं च विचारेणागच्छतीति च, आत्मा सत्यज्ञानानन्दस्वरूप इति च, देहादिप्रपञ्चः अनृतजडदुःखरूप इति च, सः प्रपञ्च अध्यारोप इति च एवं विचार्य तत्त्वंपदवाक्यजन्यज्ञानेन स्वात्मनः अहं ब्रह्मास्मीति यत्परोक्षज्ञानं तदनुभवेनसाक्षात्काररूपं यदपरोक्षज्ञानं, एतच्च यः प्राप्नोति स एव "चण्डालोऽस्तु, स तु द्विजोऽस्तु गुरुरित्येषामनीषा मम" इति भगवत्पादाचार्यवचनात्, कुटीचकबहूदकहंससंन्यासिभ्योऽधिकतया पूजनीयः, स एव परमहंसः इति निश्चित्य, त्वमपि मदुक्तप्रकारेण आत्मानं सम्यक् श्रुत्वा मत्वा ध्यात्वा साक्षात्कृत्य नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयब्रह्मरूपेण तिष्ठ। एवं तावदाचार्येणवक्तव्यम्। शिष्येण श्रोतव्यम्। इतः परं वक्तव्यं श्रोतव्यं च नास्तीति सिद्धम्॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवयतिविरचिते मननाख्यप्रकरणे द्वादशवर्णकं समाप्तम्॥

ॐ श्रीगणेशाय नमः ।

# अथ विज्ञाननौका ।

तपोयज्ञदानादिभिः शुद्धबुद्धि-
विंरक्तो नृपादौ पदे तुच्छबुद्धचा ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥
दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं
समाराध्य भक्त्या विचार्य स्वरूपम् ।
यदाप्नोति तत्त्वं निदिध्यास्य विद्वान्
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ २ ॥
यदानन्दरूपं प्रकाशस्वरूपं
निरस्तप्रपञ्चं परिच्छेदशून्यम् ।
अहंब्रह्मवृत्त्येकगम्यं तुरीयं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ३ ॥
यदज्ञानतो भाति विश्वं समस्तं
विनष्टं च सद्यो यदात्मप्रबोधे ।
मनोवागतीतं विशुद्धं विमुक्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ४ ॥
निषेधे कृते नेति नेतीति वाक्यैः

समाधिस्थितानां यदाभाति पूर्णम्।
अवस्थात्रयातीतमद्वैतमेकं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ५ ॥
यदानन्दलेशैः समानन्दि विश्वं
यदाभाति सत्त्वे तदा भाति सर्वम्।
यदालोचने हेयमन्यत्समस्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ६ ॥
अनंतं विभुं सर्वयोनिं निरीहं
शिवं संगहीनं यदोंकारगम्यम्।
निराकारमत्युज्ज्वलं मृत्युहीनं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ७ ॥
यदानन्दसिन्धौ निमग्नःपुमान्स्या-
दविद्याविलासः समस्तप्रपञ्चः।
तदा न स्फुरत्यद्भुतं यन्निमित्तं
परं ब्रह्म नित्यं तदेवाहमस्मि ॥ ८ ॥
स्वरूपानुसंधानरूपां स्तुतिं यः
पठेदादराद्भक्तिभावो मनुष्यः।
शृणोतीह वा नित्यमुद्युक्तचित्तो
भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥

इति श्रीमच्छङ्कराचार्य विरचिता
विज्ञाननौका समाप्ता।

॥ श्रीः ॥

# वासुदेवमननस्य

## शुद्धिपत्रम् ।



| पृष्ठे. | पङ्क्तौ. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | ६ | ब्रह्मचारीः | ब्रह्मचारी |
| " | १० | प्रपंञ्च | प्रपञ्चम् |
| १७ | ३ | दुःखमान्तीति | दुःखमस्तीति |
| १८ | २० | त्तेभ्यः | त्वात्तेभ्यः |
| २१ | १ | वक्षदृलतादि | वदृक्षलतादि |
| " | " | मनानात्म | मननात्म |
| २३ | ३ | मन्यात्राव | मन्यत्राव |
| " | ४ | गमनस्यतीरस्थ | गमनस्य तीरस्थ |
| ३० | ७ | यथा "सौम्यैकेन | "यथासौम्यैकेन |
| ३३ | १८ | वृत्तीर्वजयित्वा | वृत्तीर्वर्जयित्वा |
| ३४ | २ | स्मादैच्छिकं | तस्मादैच्छिकं |
| ३५ | ८ | इत्यद्यभिमानो | इत्याद्यभिमानो |

# शुद्धिपत्रम् ।

| पृष्ठे. | पङ्क्तौ. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३६ | १० | मायामयस्या पि | मायामयस्यापि |
| " | " | अनिर्वचनीयस्यपि | अनिर्वचनीयस्यापि |
| " | १७ | मेवावेविकः | मेवाविवेकः |
| ४२ | २ | ज्ञानास्याप्य | ज्ञानस्याप्य |
| ५४ | १७ | ज्ञानेन्दिरययाणि | ज्ञानेन्द्रियाणि |
| ७३ | १६ | शोऽन्यस्याति | शोऽध्यस्यति |
| ८१ | १२ | सुख मेव | सुखमेव |
| ८२ | ७ | आत्मानश्चिद्रू | आत्मनश्चिद्रू |
| ८३ | १० | इयं मनः, इदं बुद्धिः, | इदं मनः, इयं बुद्धिः, |



॥ श्रीः ॥

# वासुदेवमननस्य

## शुद्धिपत्रम् ।



| पृष्ठे. | पङ्क्तौ. | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | ६ | ब्रह्मचारीः | ब्रह्मचारी |
| " | १० | प्रपंञ्च | प्रपञ्चम् |
| १७ | ३ | दुःखमान्तीति | दुःखमस्तीति |
| १८ | २० | वात्तेभ्यः | त्वात्तेभ्यः |
| २१ | १ | वक्षद्गलतादि | वद्वृक्षलतादि |
| " | " | मनानात्म | मननात्म |
| २३ | ३ | मन्यात्राव | मन्यत्राव |
| " | ४ | गमनस्यतीरस्थ | गमनस्य तीरस्थ |
| ३० | ७ | यथा "सौम्यैकेन | "यथासौम्यैकेन |
| ३३ | १८ | वृत्तीर्वजयित्वा | वृत्तीर्वर्जयित्वा |
| ३४ | २ | स्मादैच्छिकं | तस्मादैच्छिकं |
| ३५ | ८ | इत्यद्याभिमानो | इत्याद्यभिमानो |

# विक्रय्य पुस्तकोंकी संक्षिप्त सूची।






पुस्तकोंके मिलनेका ठिकाना–

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्ष–( मुम्बई. )